वर्ष २ | Vol. 2
संख्या ३ | Number 3

ओ३म्

काश्मीर प्रदेशस्थ श्रीनगरस्थायाः

# संस्कृत साहित्य परिषदः

त्रैमासिकं पत्रम्

# ‘श्रीः’

**Quarterly Journal of the**

# SANSKRIT SAHITYA PARISHAD

## SRINAGAR, KASHMIR.

श्रीनगर पौष १९९०

*Srinagar January 1934*

सम्पादकौ

पं० नित्यानन्दः शास्त्री    पं० कुलभूषणः

वार्षिक मूल्य १।) एक रुपया चार आने ।

# विषय सूची


| नं० | विषय | लेखक | पृष्ठ |
|---|---|---|---|
| १. | भगवन्तो वेदाः स्त्रीणां स्थितिश्च | पं० प्रियव्रतो वेद वाचस्पति | १ |
| २. | अस्मद्देशे पाश्चात्य शिक्षायाः प्रभावः | पं० जगद्धर जाड्डू शास्त्री एम. ए. | ५ |
| ३. | ऋषि स्तवः | पं० धर्मदेवो विद्या वाचस्पतिः बंगलौरस्थः। | ११ |
| ४. | संस्कृत वाङ्मय परिचयः | श्री स्वामी वेदानन्द तीर्थः | १२ |
| ५. | सम्पादक दृष्टिः | कुल भूषणः | १४ |
| ६. | श्री जगद्धर भट्टः | श्री पं० नित्यानन्दः शास्त्री | १६ |
| ७. | कन्या गुरुकुलम् | कुमारी दमयन्ती देवी कन्या गुरुकुल देहरादून | १८ |
| ८. | मनोरञ्जक पुस्तक परिचयः | कुलभूषणः | २१ |
| ९. | परतन्त्र जीवनं हि कष्टम् | पं० गोविन्द दत्त. | २२ |
| १० | भोट देशे बौद्ध धर्मः | श्री त्रिपिटकाचार्यः राहुलः साकृत्यायनः | २५ |
| ११ | सं० साहित्य परिषदो वृत्तम् | परिषन्मन्त्री | ३३ |



भीमसेन विद्यालंकार के अधिकार से नवयुग प्रिंटिंग प्रैस,
१७ मोहनलाल रोड लाहौर में मुद्रित।

ओ३म्

श्रीः

| वर्ष २ | पौष सम्वत् १९९० वि० <br> तदनुसार जनवरी १९३४ | पूर्ण संख्या ७ <br> संख्या ३ |
|---|---|---|

# भगवन्तो वेदाः स्त्रीणां स्थितिश्च

( पूर्वतोऽनुवृत्तम् )

( पं० प्रियव्रतो वेदवाचस्पतिः )

अनयोर्मन्त्रयो र्विवाहेच्छू कलाकुमारौ परस्परं प्रति कथयतो यत् परस्परं पूर्णतया जानन्तौ स्वस्वरुच्यनुकूल मावां प्रजाधर्मस्य संसिद्ध्यै विवाहकर्मणि संयुज्यावहे इति।

## ३ गृहस्थितिः

विवाहानन्तरं पतिगृहं गतायाः कन्यायाः तत्रत्यैः पुरुषैः सह कीदृशः सम्बन्धो भवेत्? किं तस्याः स्थितिः पुरुषाणामपेक्षया दीना आहोस्वित् पुरुषैः समाना? वेदास्तु कथयन्ति, गृहधर्मं पालयन्त्याः स्त्रियाः स्थितिः पुरुषाणां समानैव विज्ञेया तदपेक्षया दीनां स्थितिं सा नार्हति कथंचिदपि अधिकर्तुं—

सुवाना पुत्रान् महिषी भवति गत्वा पतिं सुभगा विराजतु अ० ३-३६-४।

गृहान् गच्छ गृहपत्नी यथासो वशिनी त्वं विदथमावदासि। अ० १४-१-२०।

अस्मिन् गृहे गार्हपत्याय जागृहि ॥ अ०। १४—१—२१ ॥

यथा सिन्धुर्नदीनां साम्राज्यं सुषुवे वृषा।

एवा त्वं सम्राज्ञ्योधि पत्युरस्तं परेत्य ॥ अ० १४-१-४३ ॥

सम्राज्ञ्येधि श्वशुरेषु सम्राज्ञ्युत देवृषु।

ननान्दुः सम्राज्ञ्येधि सम्राज्ञ्युत श्वश्र्वाः ॥ अ० १४-१-४४ ॥

सुमंगली प्रतरणी गृहाणां सुशेवा पत्ये ॥ अ० १४-१-२६ ॥

एतन्मन्त्रस्थाः 'महिषी' 'विराजतु' 'गृहपत्नी' 'वशिनी' 'गार्हपत्याय जागृहि' 'सम्राज्ञी' 'गृहाणां प्रतरणी' इत्येव माद्याः शब्दा गृहिण्याः गार्हस्थ्यस्थितिः कीदृश्युन्नता, पतिगृहवासिनो जनास्तां कया समादरदृशा वलोकेरन् इति वेदमतं सुविशदमुपवर्णयन्ति।

इदं तद्रूपं यदवस्त योषा, जायां जिज्ञासे मनसा चरन्तीम्।
तामन्वर्तिष्ये सखिभिः नवग्वैः क इमान् वि चचर्त पाशान् ॥ अ० १४-१-५६ ॥

इत्यस्मिन् मन्त्रे तु पतिः स्त्रियः प्रति सुस्पष्टमेव कथयति यदहं तामन्वर्तिष्ये—तस्या अनुसरणं करिष्ये इति।

अभि त्वामनुजातेन दधामि मम वाससा।
यथा सो मम केवलो नान्यासां कीर्तयाश्चन ॥ अ० ७-७-१ ॥

अयं मन्त्रः प्रतिपादयति यदेकस्मिन् समये पत्युरेकैव स्त्री सम्भवेति। एवं, उपर्युद्धृतमन्त्र विवेचनयास्माभिरूहः क्रियते यद् भारते महाभारतादनन्तरं या स्त्रीणां दीना स्थिति रासीत् गृहस्थ जीवने न सा वेदानुमोदितेति।

## ४ सामाजिकी स्थितिः

प्रादर्शि वेदानुमोदिता स्त्रीणां गृहजीवने स्थितिः। सामाजिकी स्थिति रतासां वेदेभ्यः कीदृश्यधिगम्यते इति समासेन विन्य-

स्योपलभ्यते। वेदानां स्वाध्यायशीला जानन्ति यद् वेदेषु राष्ट्रस्य सर्वोच्चराज्यसभा 'समिति' शब्देन व्यपदिश्यते। अस्याः समितेः सदस्याः प्रजानां प्रतिनिधयो भवन्ति। प्रत्येकं सदस्यत्वप्रार्थिनः गुणागुणं विज्ञायैव प्रजाजनाः समितौ तं प्रहिरण्वन्ति। समितेरपेक्षया निम्ना राज्यसभा वेदेषु (सभा) शब्देन व्यपदिश्यते। अस्याः सदस्या अपि प्रजाजनैरेव तेषां गुणागुणं संविज्ञाय संप्रहीयन्ते। वेदानां स्वाध्यायेन विज्ञायते यत् स्त्रियोपि सभायाः समितेश्च सदस्याः शक्नुवन्ति भवितुम्। यदि ता अपि तयोः सदस्या भवितुमर्हन्ति, तर्हि न तिरोहितं यत् तासां सामाजिकी स्थितिं कीदृशीं बन्धनहीनां स्वातन्त्र्यमयीं च वेदा अनुमन्यन्ते। सभायाः समितेश्च सदस्यत्वंकामयमानया प्रत्येकं स्त्रिया प्रजाजनानां समक्ष गत्वा स्वयोग्यता साधनीया भविष्यति, तदनुसारं च प्रजाः तां सभासत्त्वाय संवरिष्यन्ते। एतेनाऽवगुण्ठन प्रथा सर्वथापि वेद विरुद्धेति प्रतिपन्न भवति, स्त्रियश्च गृहाद् बहिर्गत्वा सामाजिकं राजनीतिकं वा कर्म कर्तुं न प्रभव इत्यपि विचारो न वेदादेशानुसंवादी। यदि स्त्रियः सभायाः समितेश्च सदस्या भवितुं क्षमन्ते तर्हि ता राष्ट्रस्य सर्वोच्चशासकपदमप्याधिकर्तुं समर्था इत्यपि वेदो ध्वनयति। यतो हि—सभा समित्योः सदस्यत्व योग्यतावन्तो जना एव संवरणकर्तृभिः ( Voters ) सर्वोच्च शासक पदे—राष्ट्रपतिपदे वाभिषिच्यन्ते। स्त्रीणां सभासमित्योः सदस्यत्व योग्यता तदाधिकारश्च—

अहं वदामि नेत् त्वं 'सभायाम्' अह त्वं वद
ममेदसस्त्वं केवलो नान्यासां कीर्तयाश्चन॥ अथ०।
७—३८—४॥

यदक्षेषु वदा यत् 'समित्यां' यद्वा वदा
अनृतं वित्तकाम्या॥ अथ० १२—३—५२॥

इत्याभ्यां मन्त्राभ्यां ज्ञायते। प्रथमे मन्त्रे पत्नी पतिं कथयति यदहं 'सभायां' वदामि त्वं तु न वदसि, त्वं तु मदिच्छाधीन एव वदसि यदि वदसि। अनेन स्त्रियाः सभागामित्वं तत्र भाषणकारित्वं च सुव्यक्तं व्यज्यते। द्वितीये च मन्त्रे दम्पती परमात्मानं प्रति ब्रूतो यद् हे भगवन् आवाभ्यां व्यवहारेषु, 'समित्यां,' अन्यत्र वा क्वचित् धनादि लाभेन यदनृतमुद्यते तद् भवान् क्षमताम्। अनेन संविज्ञायते यत् पतिरिव पत्न्यपि समितिं शक्नोति गन्तुं तत्र च तया अनृत भाषणं न विधेयम्। न केवलं सभासमितिष्वेव स्त्रीणां समानाधिकारो वेदेन प्रतिपाद्यते किञ्च समराङ्गणमपि ता खड्गसहाया अवतरन्ति। श्रूयताम् —

मम पुत्राः शत्रुहणोऽथो मे दुहिता विराट्।
उताहमस्मि संजया पत्यौ मे श्लोक उत्तमः॥ ऋग० १०—१५९—३॥

अत्र काचित् पत्नी कथयति यन्मम पुत्राः शत्रुहन्तारः सन्ति, मम दुहिताऽऽप्यरीन् दमयति, अहं स्वयमपि रिपून् जेतुमुच्छेत्तुञ्च क्षमा, मम पतिरपि शत्रुनिषूदन कर्मणि महद् यशोऽर्जयति। स्त्रियोपि प्रधनानि गत्वा सपत्नान्निषूदयन्तीति—

येनेन्द्रो हविषा कृत्व्यभवद् द्युम्न्युत्तमः।
इदं तदक्रि देवा असपत्ना किलाभुवम्॥ ऋग० १०-१५९-४॥

इत्यनया ऋचा पत्नी 'असपत्ना किलाभुवम्' इति व्याहरन्ति सुव्यक्तमुद्घोषयति।

आर्यमिश्राः! भगवता वेदेन नारीणां कीदृशी परमोदारा स्वातन्त्र्यमयी स्थितिरुपदिश्यते इति मन्ये उपर्युद्धृत मन्त्र विवेचनया श्रीमतां मनःसु स्वभिव्यक्तं भवेत्। वेदानुमोदिता स्त्रीणां स्थितिरद्यापि जगता सर्वांशेन न स्वीक्रियते। परमात्मन, सर्वसुन्दरसृष्टेः स्त्रिया अधिकाराणां मर्दनमद्यापि बहुत्र भूमागेषु भवति। अत्रभवतां श्रीमतामुद्योगेन भगवता वेदेन प्रतिपादितां पुरातनीं स्थितिं स्त्रियः पुनरप्यधिष्कुर्युरिति परमकारुणिको भगवान् श्रद्धाञ्जलि याच्यते।

# अस्मद्देशे पाश्चात्य शिक्षायाः प्रभावः

(पं० जगद्धर जाडू शास्त्री एम० ए०)

( २ )

एतेषु वैदेशिकेषु राज्येषु आङ्गलानां राज्यव्यवस्था भारते वर्षे मुख्या सुविस्तृता च। एतेषां शासनकाले प्रथमं आङ्गलगुरुभिः पादरीमहोदयैराङ्गलभाषायाः प्रचारः प्रारब्धः बहुषु देशप्रदेशेषु। यद्यपि पादरीमहाशयानां बहुभिर्वैतनिकैरवैतनिकैर्वा मिशनरीपरिषत्सभासद्भिः स्वव्ययेन भारतीयानां कृते पुस्तकानि मुद्रयित्वा प्राकर्ष्येण आङ्गलभाषायाः प्रचारे परिचालने च प्रयतितं, तथापि इंग्लिश भाषाध्ययने स्वधर्म त्यागं परधर्मावलम्बनभयं शंकमानैरत्रत्यैर्जनैः प्रारम्भकाले तथा इयं नो आद्रियत यथा इयं इदानीन्तनै रसिकैः सकण्ठग्राहं गृह्यते अभ्यस्यते च। एतदत्रानुसन्धेयं यत् प्राचीना यवनराज्यकाले शासकानां गुणानेव अनुकुर्वन्ति स्म न तु तेषां दोषान्। वरञ्च तस्मिन्समये पाश्चात्याः साम्प्रतिकजनसमुदायवत् अस्मदाचारान्, अस्मदीयं शिक्षाशिल्पजातं, अस्मदीयां वेषभूषां तथा अस्माकं संप्रदायक्रममपि स्वीचक्रुः। स्वधर्मं परित्यज्य भारतीयं धर्ममङ्गीकुर्वन्ति स्म, अस्माकं परिष्कृत देशभाषानुशीलिनः अस्मदीय शिक्षाग्रहणतत्पराश्च बभूवुः। अस्त्वेतावता, कथनस्याभिप्रायोऽयमेव यदस्मत्पूर्वजा विचारस्वातन्त्र्यमवलम्बमाना आत्मोत्कर्षशालिनः परानुकरणं दोषः' इति निर्धारयामासुः। इदानीन्तनास्तु यदात्मगौरव-विचारस्वाधीनतादिशक्ति वञ्चिताः कार्याकार्यविचारमूढाः कपय इव यत्र कुत्रचन विषये परेषामनुकृतिं कुर्वन्ति, तन्नितरां खेदावहम्। निजजातिगौरवरक्षा विचारस्वातन्त्र्यं च इत्येतदुभयं परा सभ्यता, शिक्षाफलं मनुष्यजन्म साफल्यं च। एतद्धीनो नरो जीवन्नपि अजीवन्नेव। अस्तु। आङ्गलभाषा दिनाद्दिनं चान्द्रमसी लेखेव वृद्धिं जगाम। शासकवर्यैरपि अस्याः प्रचारोऽनुमोदितः। शिक्षाशालासु इयमावश्यको विषयः। दैशिकीषु भाषासु मुख्यं स्थानं लब्धवती इयमेव। राजशासनेन प्रवर्धितपठन-पाठन प्रोत्साहा कार्यालयेष्वपि संजातसंचारा

क्रमेणाभवत् । किं बहुना, पत्रलेखने, व्यवहारविषये, विचारविनिमये च भारतीयेषु देशप्रदेशेषु पाश्चात्यदेशान्तरेषु इयमेव भाषा बाहुल्येन व्यवह्रियते । भारतीयबालानां पठनावस्थांप्राप्तानामारम्भकाले एव 'Cat. Rat. Mat.' इत्यादिशब्दान् उच्चारयताँ ईदृशः शिक्षोपक्रमो जायते । 'ओं नमः सरस्वत्यै ओं स्वस्ति सिद्धं' इत्येतादृशानि शिक्षारम्भवाक्यानि, यानि पूर्वं संप्रवर्तने समभवन्, मन्त्रभीता भूत प्रेत पिशाचादय इव दूरं पलायितानि सन्तीदानीम् । पाठशालासु कार्यालयेषु अन्येषु व्यवहारादिषु च प्रतिदिनं प्रतिक्षणं प्रतिवादनं जनानामभ्यासे इयमेव भाषा वर्तते । आजन्मनो वार्द्धक्यपर्यन्तमस्यां भाषायामेव व्यवहारो भवति । आङ्गलभाषोपनिबद्धानां नानाविधाख्यायिकोपन्यासादीनां सामाजिकपुस्तकानां च पठनेन पाश्चात्यसमाजस्य शिष्टाशिष्टाचार-रीति-कुरीति-विनय-दुर्नयादीनां परिचयात् देशान्तरभ्रमणव्यतिकरेण च भारतीययुवकानाँ विचारपरिवृत्तिरधुना स्वाभाविकी एव । आचारविचारपरिवृत्त्या सह नियमसंस्कारादिषु अशनपानवस्त्राच्छादननिवसनप्रकारेषु च भारतीयानाँ महान् विपर्यासो दरीदृश्यते । पाश्चात्यानां प्रबन्धेन प्राक्तनी पठन-पाठन प्रणाली अधुना पाश्चात्यरीत्यैव परिचाल्यते । यस्यनालन्दा-तक्षशिला-इत्यादि विश्वविद्यालयेषु पूर्वं नानादिग्देशागता विद्यार्थिनो गुरूणाँ पादतलेषूपविश्य शास्त्रतत्त्वमर्मज्ञानेन आत्मन अस्तित्वं सफलममन्यन्त, अधुना तस्यैव भारतवर्षस्य पुत्राः शासकरुच्यनुसारेण भारतीयविश्वविद्यालयेषु प्रचलितां शिक्षामसमग्रां मन्यमानाः केवलं तामेव शिक्षां सभ्यतां च तात्त्विकीं परिपूर्णां च मन्यन्ते यां ते पाश्चात्यदेशेषु गत्वा तत्र अभ्यस्य गृह्णन्ति । भारतीयं सर्वं तृतीयश्रेणीयोग्यं पाश्चात्यं च पुनः प्रथमवर्गीयं रुचिकरं च इत्येतादृशोऽपि मतिविपर्ययो जनसमुदाये प्रतिष्ठितो लक्ष्यते । पाश्चात्यविचाराक्रान्ता जना गृहेषु बालकान् बालिकाश्च नमस्कार निर्वाचनस्थाने 'सुप्रभातं, सुसायं' इत्यादि पाश्चात्य शिष्टाचारं शिक्षयन्ति । शिशुपालने पाश्चात्यधात्रीणां नियुञ्जनं, पाश्चात्य-

प्रकारेणैव तेषां वर्धनं शिक्षादानं च इत्येतदपि केषांचन गृहेषु दृष्टिगोचरं याति। ललनाः पूर्वं सुकेश्यः, दीर्घकेश्यः इत्याख्याभिः रूपगौरवत्वं दधुः। अधुना ता अर्धलुञ्चितकेश्यो ह्रस्वमूर्धजा नानाविधकेशविन्यासैरात्मानं भूषितंमन्याः अवलोकनपथं यान्ति। उन्नतपार्ष्णिवद्भिः पादत्राणैर्विहरन्तीनां तासां यदशोकमपि मार्गे पदानि विषमीभवन्ति तत् आधुनिकसमाजशिक्षाग्रहण फलमेव।

अस्मद्देशीयाः केचन पाश्चात्यशिक्षां ग्रहीतुकामा आङ्गलदेशादिभ्यो विविधपरीक्षा उत्तीर्य परावृत्य च निजगृहेषु केवलं दोषदृष्ट्यैव सर्वं पश्यन्ति। परावर्तितदृक्कोणेन भारतीयसंप्रदायसंस्काररीत्यादीन् समालोचयन्तः तेषु घृणां प्रकटीकुर्वन्ति। 'मिसूमयो' सहोदराणां तेषां मते यत्किंचित् पश्चिमीयं सामाजिकसंप्रदायादिकं तत्सर्वं रम्यं भाति। ते च एकदृष्टयः निजधर्मशास्त्रसिद्धान्तितान् अस्मत्पूर्वजानुमोदितान् संप्रदायान् अहंमन्यताग्रहग्रस्ताः स्वविचारदृष्टिकोणेनैव अनुसन्दधानाः, एतेषामेकमेव पक्षं समालोचयन्तः 'भारतीयाः सुरीतीः' कुरीतीरिति अध्यवस्यन्ति। परन्तु, शिक्षिताः सभ्याः महात्मानस्तेषां भ्रमोऽयमिति निर्धारयन्ति। यन्तु केनापि, 'कुसङ्गेन जातः साङ्क्रामिको रोगो दुश्चिकित्स्यः अपिच सत्संगजा गुणास्तथा नरं सत्वरं नोपकुर्वन्ते यथा कुसंस्कारास्तमनायासेन विकृतिं नयन्ति' इति तदाधुनिकीं दशां भारतीयानां दृष्ट्वा तथ्यमेव प्रतिभाति। पश्यामोऽपि वयं यत् कतिपये अस्मदीयाः नवयुवकाः, अथवा पाश्चात्यशिक्षाग्रहणेन कृतकृत्यंमन्या भारतीया अपि केचन, आङ्गलेयानां साधुतमविमलमतित्वं, महामानित्वं, निष्कामस्वदेशसेवापरत्वं, सामयिककार्यानुल्लङ्घनत्वं, स्वजातिगर्वं तथा तेषामन्यान् गुणाननुकृत्य केवलं तेषां विलासित्वं, मदिरासेवनत्वं, मृगयाव्यसनित्वं, द्यूतव्यसनित्वं, तेषां वेषभूषादिकममेव गृह्णन्ति प्रकटीकुर्वन्ति च। क्रियया गेहेनर्दिनस्ते निजभ्रातृषु उद्दण्डतां दर्शयन्तोऽन्यदेशीयानां मनोरुचिमनुवर्तमाना यथासमयं तेषां समीपे निदेशीयानां सभ्यतां असभ्यतामिति वदन्तः स्वकीयपश्चिमीयशिक्षि-

तत्वस्य परिचयं ददति। येन तेषां साधुवादमाशंसमाना नितरां तेषां घृणापात्रमेव भवन्ति। 'स्वधर्मे बधनं न श्रेयः परधर्मोऽभयावहः' इति गीतापाठं स्वीकृत्य केचन विपर्यासितमतयः पाश्चात्यदेशेभ्यो दीक्षां गृहीत्वा, प्रत्यागम्य च निजदेशं, 'स्वधर्मे न धनावाप्तिर्नच किञ्चन श्रेयो विद्यते' व्यायतदृष्ट्या विविच्य, स्वपूर्वजमर्यादायै तिलाञ्जलिं दत्त्वा निजधर्मविरोधिनामेव धर्मग्रहणे आदरं दर्शयन्तः, श्रुतिस्मृति-सदाचारान् विषमिव विहाय निजधर्मभ्रष्टाः पाश्चत्यगुरुवर्याणां धर्म-श्रम मेव सविकत्थनं भजन्ते।

त्रिंशद्वर्षपूर्वं कश्मीरदेशे ब्राह्मणानां गृहेषु प्रचार आसीत् संस्कृत साहित्यपठनपाठनस्य। गृहे गृहे चासन् पाठशालाः। ब्राह्मणा वेदपाठरता वेदविहित सदाचारानुशीलनपरा अभवन्। साधा-रणयेन जनाः पाश्चात्यरीतीः पाश्चात्यशिक्षाक्रमं च नान्वमोदन्त। आङ्गल वस्त्रपरिधानस्य प्रचारो न्यूनतयैव दृष्टिगोचरीभवति स्म। आंगलभाषायाः पठनमपि लोकापवादभयात् स्वधर्मभीरुतया च लोकेषु असामान्यमासीत्। किञ्चिन्मात्रेण समाजबहिष्कृतमपि निरधार्यत। स्मरामि, तस्मिन्कालेऽस्मत्संबन्धी एकोजन आंगल-भाषापठनमारेभे। तस्य ज्यायान् भ्राता एतद्व्यवसायं तस्याधिगम्य तस्मै भृशं चुकोप। संभाषणादिकमपि तेन सह त्यक्तवान् सः, तस्य कोपकारणं ज्ञात्वा कनीयान् भ्राता तत्समक्षमाङ्गलभाषाभ्यासं न चकार। परंतु रात्रौ स्वकोष्ठे द्वारमवरुध्य गुप्तरीत्या निजकामनां परिपिपूरयिषुः, तथा आंगलभाषाध्ययने मन आसञ्जयामास यथा कतिभिरेव वर्षैः स भाषणे, निबन्धलेखने, पत्रव्यवहार करणे समर्थोऽभवत्। आंगलभाषाकृपयैव समीचीनां जीविकामपि लब्ध-वान् सः। तस्य भ्राता यः प्रथमं तेन सह संभाषणं तत्याज, कोपं विहाय तदुद्योगं प्रशशंस। निजपुत्रानपि राजभाषाध्यने प्रेरयामास। उपर्युक्तं बृत्तान्तमुल्लिख्य एतद्वक्तुमभिप्रेतं यत् या पाश्चात्यदेशभाषा अस्माकं वयोवृद्धैः पूर्वमवामन्यत। तस्या एवाधुना ते स्वगृहेषु

प्रचारतत्पराः । क्रमेण च आंगलभाषा प्रचारे वृद्धिं गते सति अत्रत्याः श्रीनगरराजधानीललामभूताः प्राक्तनाः पाठशाला लयं ययुः । संस्कृत साहित्य पठन पाठन शैली च नष्टं गता । कामं सन्ति बह्वयः पाठशाला अधुनापि राजकीयपुरुषाणामाधिपत्ये निरीक्ष्यन्ते च परन्तु कालविपर्यासेन ता नष्टशोभा इव अनुमीयन्ते । राज्यलब्ध प्रोत्साहाया आङ्गलभाषायाः पठने सर्वेषां रुचिर्दृश्यते । यतो राजमानं राज्ये बहुवैतनिकपदलब्धिश्च इत्यादि अस्मिन्नेव निर्भरम् । सत्यं कथयन्ति अस्मद्वयोवृद्धाः "यथा राजा तथा प्रजा" ।

पाश्चात्यशिक्षाप्रभावेन निखिलभारत वर्षीयाणां विचारेषु महान्विपरिणामो दरीदृश्यते । पाश्चात्यशिक्षाप्रभावेण दीक्षितानां कार्यालयाध्यक्षाणां, जनसमुदायस्य, अध्यापकानां, अध्यापिकानां विद्यालयेषु विद्यार्थिनां, विद्यार्थिनीनां, बालानां वृद्धानां च अशनोत्थान-निवेशोपवेशन-वेषभूषादिषु दिनाह्निं विचारविपर्ययः प्रवर्धमानो निरीक्ष्यते । यत्पूर्वमस्पृश्यममन्यतास्माभि स्तदिदानीं स्पर्शक्षमं जानीमः । यत्पूर्वमभोज्यमासीत् तदधुना सर्वेषां दृष्टिपथे अभ्यवहारार्हम् रुचिकरं च । मम बालकावस्थायां संभूतमेकं वृत्तान्तमधुना मम स्मृतिपथमायाति । यदा स्वर्गत महाराज प्रतापसिंह बहादुर पुत्र जन्मोत्सवे मोदका व्यभज्यन्त तदा कोऽपि अस्मदीय सुहृद् एकं विभागं प्राप्य समाचारपत्राग्न्तर्गतं च कृत्वा अस्मद्गृहमाययौ । मोदकान् दृष्ट्वा नितरामहं हृष्टोऽभूवम् । परन्तु एकमपि मोदकं न ददाति स्म मह्यं कश्चित् यत एते काकल पत्रगता अतएवाभक्ष्याः आसन् । ततस्ते मोदका गोभ्योऽदीयन्त । कश्मीरेषु तस्मिन्समये काकलपत्रगतं पक्वं भोजनं मिष्टान्नकं चास्पृश्यमभोज्यं चास्मद्देशवासिनोऽमन्यन्त । परन्तु नूतन विचार दृष्ट्या कालविपर्यासाद्वा अधुना काकलपत्राणि अस्पृश्यानि नैव सन्ति । भोजनशालासु अपि तेषां गतागते वर्तते एव ! हास्येन जनाः परस्परं भाषमाणाः श्रूयन्ते यत् कदा केन मुनिना, कया धर्मशास्त्ररीत्या एतानि काकलपत्राणि

इदानीं संस्कृतानि, कृतवेददीक्षासंस्काराणि, येनाऽस्पृश्यचराणि एतानि साम्प्रतं स्पर्शार्हाणि संजातानि। य एव अस्माकं वयोवृद्धाः काकल पत्रगतान् मोदकान् अस्पृश्यान् अगणयन् त एवाधुना काकल पत्रेषु दत्तं मिष्टान्नादि स्वयं खादन्ति अस्मभ्यमपि वितरन्ति । यद्यपि आस्तिकतायां धार्मिकतायां च तेषां कोऽपि विपर्ययो न दृश्यते परन्तु कालपरिवृत्त्या विचारपरिवृत्तिरपि स्वाभाविकी एव।

अथच पाश्चात्यशिक्षया पाश्चात्यानां गुणग्राहित्वमेवास्माकमभिप्रेतम्। जगतीतले यत्किञ्चिद्वस्तुजातं विद्यते तत्सर्वं गुणदोषैराकीर्णम्। खलास्तु स्वभावतो दोषानेव स्वीकुर्वन्ति, परन्तु सन्तो गुणग्रहणे एव यतन्ते। यदि च शास्त्रदृष्ट्या संकीर्णापि पश्चिमीया शिक्षा, परन्तु गुणवत्त्वमपि विद्यते अस्याम् । यदस्माभिरननुसंधाय नातिक्रामणीयम्।

अथ केयं पाश्चात्यशिक्षा ? पाश्चात्यशिक्षा तावत्—पश्चिमीयभाषाणामभ्यसनं; तेषु तेषु देशेषु भ्रमणं यात्रिकवत् स्वल्पकालमवस्थानं च; तज्जनपदानां यत्किञ्चित् साधुतम सामाजिक संप्रदायरीत्यादिकं तस्य यथासंभवमनुकरणं पाश्चात्यजनानां मान-मर्यादा-सौशील्य-सौजन्य-साधुस्वभाव-देशभक्ति-राजभक्ति-प्रतिज्ञापालन-उद्योग कालक्रमादि-गुणगणग्रहणे अस्माकं प्रयत्नः, तेषां प्रकृष्टप्रवर्धितवैज्ञानिकबलस्य गूढविचारशक्तेः, शिल्पविज्ञानविद्यायाः, महामस्तिष्कताया अनवरतं स्पृहयालुतया च स्पर्धा । अर्थशास्त्र विषये राजनीतिविषये वास्तुविद्यायां, कृषिवाणिज्य व्यवसायविषये च यत्किंचित् तेषु निर्दोषं विद्यते वस्तुजातं तस्य विद्यार्थीभूय शिक्षणम्, ग्रहणं, स्वीकरणं, मननंच। नास्त्यत्र संदेहः, यत् आङ्गलेय कुशिक्षा ग्रह ग्रस्तान् बाबूसाहिब शब्दगर्वितान् कांश्चित् जनान् वर्जयित्वा सन्त्यत्र बहवो नरपुङ्गवाः प्रातः स्मरणीयमहिमानः ये पाश्चात्यदेशान् स्वल्पकालमध्युष्य,, तत्तद्देशोद्भव-सुचरित-सुनीति-सुशिक्षादिसद्गुण प्रसूतेभ्यो मधुकरा इव मधु निपीय, महामोदमधुरस्वान्ताः स्वदेशं प्रत्यागत्य,

निजसामाजिक कुरीत्युन्मूलने बद्धकटयः; अपि च तत्तद्देशदृष्टानुमोदित शिल्पविद्या-विज्ञानकलादिकं स्वदेशेप्रचारयितुकामाः स्वदेशहिते बद्धानुरागाः, स्वकीयमस्तंगतं जातिगर्वं देशाभिमानं च प्रत्युज्जीवयन्तः; कुमार्गगामिनो निजभ्रातॄन् शिष्टाचार शिक्षा पूर्वकं सत्पथं साधुवाक्यैरानयन्तश्च। यदपि च ते वेदादिष्टसदाचारानुसरणं पूर्वं स्वपूर्वजानां चरितमनुकुर्वन्ति देशसेवया, सौभ्रात्रेण, सौजन्यप्रदर्शनेन विद्यानुरागितया वा तत्सर्वं प्रशंसार्हम्। एतेषां पुण्यश्लोकानां महाशयानां चरितं निरीक्ष्य आशंसामहे वयं यत् शीघ्रमेवास्मदीयं भारतं वर्षं प्राचीनानां मस्तकं समुज्ज्वलयत् पुनरपि निजं शिरोऽन्यदेशापेक्षया समुन्नतं कुर्वत् ओजसा तेजसा च सुसम्पन्नं निजं निजं प्रभावं प्रत्यानयेत् सार्वदिकीं कीर्तिं च अनुभवेदिति।

---

## ऋषिस्तवः

(कवयिता—पं० धर्मदेवः सिद्धान्तालङ्कारो विद्यावाचस्पतिः (बंगलौर)।

१ एकोऽपिसन्निर्भयवीरवर्यः, समस्तपाखण्डमखण्डयद्यः।
सत्यव्रतश्रेष्ठममुं महान्तं, वयंदयानन्दमृषिं नमामः॥

२ विषं प्रदायाप्यपकारकर्त्रे, योऽदाद्धनंतस्यहि रक्षणार्थम्।
प्रेम्णा स्वशत्रूनपि मोहयन्तं, तं श्रीदयानन्दमृषिं नमामः॥

३ न यं कृतान्तोऽप्यशकद्विजेतुं, यस्याग्रतोबद्धकरः सतस्थौ।
योगाग्निनादग्धसमस्तदोषं, तं श्रीदयानन्दमृषिं नमामः॥

४ 'यद्यंगुलीरप्यरयादहेयुस्तथापियास्यामिन तत्रचिन्तां।
इत्यादि वाक्यं समुदाहरन्तं, तंश्रीदयानन्दमृषिं नमामः॥

५ दयाया यः सिन्धुर्निगमविहिताचारनिरतो,
विलुप्तंसद्धर्मं पुनरपि समुद्धर्तुमनिशम्। दिवारात्रं येते, यतिवरगुणग्रामसहितो दयनन्दो योगी, विमलचरितोऽसौ विजयते॥

६ यदीयं वैदुष्यं, श्रुतिविषयकं लोकविदितं,
यदीयं योगित्वं कलियुग जनेष्वस्त्यनुपमम्।
हितार्थं सर्वेषामिह निजसुखंयोऽपि विजहौ दयानन्दोयोगी,

विमल चरितोऽसौ विजयते ॥

७ जनाःसर्वेनूनं, भुवनजनितुः पुत्रसदृशाः,
अतोऽन्योऽन्यंस्नेहः, सकलमनुजानां समुचितः ।
न कोऽप्यस्पृश्योना, इतिविमलभावं प्रचुरयन्,
दयानन्दोयोगी, सरलहृदयोऽसौ विजयते ॥
स्वराज्यं सर्वेभ्यः, परमसुखदं शान्तिजनकं,
स्वदेशीयो धार्यः, सकल सुजनैर्वस्त्रनिवहः
सुराष्ट्रीयान् भावान्, दिशिदिशि दिशन् भीतिरहितो
दयानन्दो योगी, विमलचरितोऽसौ विजयते ॥

---

## वैदिकं वाङ्मयम्

(पूर्वतोऽनुवृत्तम्)

( श्री स्वामी वेदानन्द तीर्थः )

स्वामी स्वीये निरुपमे सत्यार्थ प्रकाशे प्रथमे समुल्लासे—

'अग्नि आदि नामों से परमेश्वर के ग्रहण में प्रकरण और विशेषण नियम कारक हैं। इससे क्या सिद्ध हुआ, कि जहां जहां स्तुति, प्रार्थना उपासना, सर्वज्ञ, व्यापक शुद्ध सनातन और सृष्टि कर्त्ता आदि विशेशण लिखे हैं, वहां वहां इन नामों से परमेश्वर का ग्रहण होता है। और जहाँ जहाँ ऐसे प्रकरण हैं कि' ततो विराडजायत विराजो अधिपूरुषः। यजुः ३१। ५ श्रोत्राद्वायुश्च प्राणश्चमुखादग्निरजायत॥ यजु ३१। १२ तेन देवा अयजन्त॥ यजु ३१। ६ पश्चाद्भूमिमथो पुरः॥ यजु ३१। ५ तस्माद्वा एतस्मादात्मन आकाशः संभूत आकाशाद्वायुः, वायोः अग्नि, अग्नेः आप, अद्भ्यः, पृथिवी, पृथिव्या ओषधय, ओषधिभ्यो अन्नम्, अन्नाद्रेतः, रेतसः पुरुषः। स वा एषपुरुषोऽन्नरसमयः'। तै उ। यह तैत्तिरीयोपनिषद् का वचन है। ऐसे प्रमाणों में विराट, पुरुष, देव, आकाश, वायु, अग्नि, जल, भूमि आदि नाम लौकिक पदार्थों के होते हैं। क्योंकि जहां जहाँ उत्पत्ति, स्थिति, प्रलय; अल्पज्ञ, जड़, दृश्य आदि विशेषण भी लिखे हों, वहां वहां परमेश्वर

का ग्रहण नहीं होता। वह उत्पत्ति आदि व्यवहारों से पृथक् है। और उपर्युक्त मन्त्र में उत्पत्ति आदि व्यवहार हैं। इसीसे यहां विराट् आदि नामों से परमात्मा का ग्रहण न होके संसारी पदार्थों का ग्रहण होता है। किन्तु जहां जहां सर्वज्ञादि विशेषण हों, वहां वहां परमेश्वर का और जहां जहां इच्छा द्वेष, प्रयत्न, सुख दुःख और अल्पज्ञादि विशेषण हों, वहां वहां जीवका ग्रहण होता है। ऐसा सर्वत्र समझना चाहिए क्योंकि परमेश्वर का जन्म मरण कभी नहीं होता। जन्मादि विशेषणों से जगत् के जड़ और जीवादि पदार्थों का ग्रहण करना उचित है, परमेश्वर का नहीं।" इति।

अर्थात् वेद शब्दार्थव्यवस्थापने प्रकरणादिकं विशेषणानि चानुग्राहकाणि। नैवायं नियम एकान्ततो वेद एव प्रयुज्यते, लोकेपि भूयानस्य नियमस्य व्यवहारो दृश्यते। तद्यथा—कश्चित्कंचित्प्रत्याह—'सैन्धवमानय।' इति। अनुयुक्तःपुरुषः भोजनवेला चेत्, लवणमानयति। भ्रमणादि समयो यदि, अश्वमुपस्थापयति। तस्य एवंविधाचरणे प्रकरणं नियामकं विद्यते। निशा पीता वातनाशिका चेत्युक्ते न कोपि प्रेक्षावान् निशाशब्देन रात्रिमबुध्यते, अपितु पीतावातनाशिका चेति विशेषणाभ्यां हरिद्रां गृह्णाति। तस्माच्छब्दार्थ व्यवस्थापनायामवश्यं प्रकरणादिकं निध्यातव्यमिति सर्व मनवद्यम्।

तदेवं वेदे एकस्याद्वितीयस्य परमात्मनः पूजादिकं विहितमस्ति इति सुस्थापिते तस्येश्वरस्य स्वरूपादिकं कीदृगिति समासतः प्रदर्श्यते।

( अपूर्णम् )

# सम्पादक दृष्टिः

## परिषदो वार्षिकोत्सवः—

अन्यस्मिन् स्थाने परिषद्वृत्तमिति लेखे काश्मीरस्थसंस्कृत-साहित्यपरिषदः सप्तमस्य वार्षिकोत्सवस्य संक्षिप्त वर्णनं पाठकानां दृष्टिगोचरं भविष्यति। पण्डितानां गृहनिकटवर्ति शीतलनाथ मन्दिर उत्सवरचनेन सभायाः कार्यकर्मणश्च साधारणजनेष्वपि सूचनेन प्रसारितम् आसीद अस्माकमुद्देश्यम्। प्राचीन भूमावस्यां अतिस्वल्पा-संख्या ब्राह्मणानां संस्कृतवाङ्मयकृतपरिचयाणां हिंदी भाषायामपि विहिताभ्यासानां विद्यते। उत्सवेऽस्मिन् प्रोत्साहिताः काश्मीरिकाः पण्डिताः संस्कृतहिन्द्यध्ययनार्थं रुचिमदर्शयन्। हिंदी संस्कृत साहित्यमण्डलस्या चिरेणैव स्थापितस्यकेचन मण्डलाधिकारिणो प्युपस्थिता आसन्। आशासे स्वोद्देश्यप्रचारायाधुना भूयिष्ठं प्रयत्नं कुर्वीरन्।

## अस्मद्देशेपाश्चात्यसभ्यतायाः प्रभावः—

इतिशीर्षकेण परिषदः माननीयसभासदा पं० जगद्धर जाड्ना एम० ए० शास्त्रिणा सुन्दरो लेखोऽपाठि सभाधिवेशने कस्मिँश्चित्। लेखोऽयम् पत्रे प्रकाशितोऽस्ति। विदुषानेन काश्मीरेषु संस्कृतभाषा-ह्रास कारणमपि वर्णितम्। सर्वत्र भारतवर्षे इदमेव कारणं सुरभारती-ह्रासस्य प्रतीयते। पाश्चात्यभाषाज्ञानामपेक्षया नास्ति मानं गौरवञ्च संस्कृतज्ञानामाधुनिके काले। अपि चोदरंभरणेऽपि अक्षमा एते बराकाः। संस्कृतरसिकैस्तु सर्वत्रास्योपायाः विचारास्पदे कर्तव्याः राजकीयपाठशालासु महाविद्यालयेषु। जात्यध्यक्षसंस्थासु स्वकीय-विद्यालयेष्वपि नास्याः तादृशः मानो यादृशः स्वसंतत्या सह साधारण-जनानाम्। किमिदं कथञ्च संशोधनीयास्त्यवस्थेयं विषयो महान्। स्थानाभावेन विरम्यतेऽस्मादद्य, पुनश्च प्रदर्श्यन्ते कदाचित् स्वविचाराः विषयेऽस्मिन्।

## सहयोगि रत्नाकरस्योपालम्भः—

श्रियः कस्मिंश्चित् पत्रेऽस्माकं मातापितरौ इति शीर्षकेण केनचिद् महानुभावेन लेख एक स्वनाम्त्रा प्रकाशित आसीत्। रत्नाकरस्त्विमं लेखं स्वकीयपत्रे पूर्वप्रकाशितं वर्णयति। अस्मिन् जन्मनि रत्नाकरस्य तु लेखो ऽयं जन्वरीमासादारभ्याद्यावधि ६ मासेषु न कदापि अदृश्यत। परं हर्षास्पद यत् ७ वार्षिकीं निद्रां सम्भुज्य कतिपयमासैः पुनर्जन्म प्राप्य जागरुकोऽस्ति। यद्यपि नवीनायामवस्थायामस्य न दृष्टिगोचरोऽभूदयं लेखस्तथापि लेखकानां सम्मानाय श्रीपत्रस्य च गौरबाय नास्ति साधुवादोऽस्माकं पौनः पुन्येन लेखानामुद्धरणेन, अन्येषां लेखानांच- स्वकीयत्वप्रदर्शनेन। सहायकानामस्माकं महती कृपा स्यात् यदि नियमोऽयमवश्यमेव तैःपालितः स्यात्। तैःस्वकीयाः लेखाः स्वभाषा- वस्त्राभूषणैरलङ्कृता एव सदैव प्रेषणीयाः।

## लेखकानां भाषा संस्कारः—

आवरणस्य द्वितीये पृष्टे विषयसूची विज्ञापनं विद्यते श्रियः सम्पादकयोः यत् सर्वे लेखाः लेखकानां भाषयैव प्रकाश्यन्ते। भाषाविचारार्थे तुलेखका एव उत्तरदायिनः न च सम्पादकौ। सत्यं कालेजविद्यार्थिन एकस्य ईश्वरजीवयोः भिन्नत्व प्रदर्शन पूर्वके लेखे आसन् काचन त्रुटयः। जानीमो वयं यदन्यत्रापि केषुचित् लेखेषु कदाचित् प्रमादात् व्याकरण दोषाः भवन्ति एव। लेखकानामुत्साह वर्धनाय यदि केचन द्वितीय श्रेणी लेखा अपि कदाचित् प्रकाशिता भवेयुः तर्हि को दोषः। यदि केषुचित् प्रथमश्रेणी लेखेष्वपि प्रमादात् कश्चिदशुद्धशब्दोऽपि प्रयुक्तः स्यात् तर्हि काऽपत्तिः।

## जीवितभाषाणांउपचारक्रमः—

यद्यपिसहयोगिनोऽयमादेशः सावधानताया बाढ़मङ्गीक्रिय- तेऽस्माभिः तथापि तस्य संमुखेऽर्वाक्कालीनानां उर्दू आंगलफ्रेंचप्रभृति भाषाणामुदाहारो विद्यते। एतासु पुरुषाः व्यवहरन्ति निर्भीकाः न च

संस्कृतज्ञवत् सर्वदा भाषणे लेखे च लज्जामेव प्रदर्शयन्ति। साधारण-भाषालेखा अपि उत्तमसुन्दरशुद्धसंस्कृतभाषालेखानामग्रेसरा भवितु-मर्हन्ति। उर्दूभाषाङ्गलभाषयोश्च प्रयोगे यथा शक्ति यथा बुद्धि सर्वत्र सर्वदोत्सुकाः दृश्यन्तेस्त्रीपुरुषाः न च देववाणीप्रयोगे। किं कारणमत्र। अस्मद् सम्मतौ संस्कृतह्रासकारणेषु कारणमेकमिदं यत् संस्कृतज्ञाः दोषान्वेषणे सर्वदा तत्पराः।

कुलभूषणः

सं० सम्पादकः

---

# शम्भुः प्रसीदतु

श्री जगद्धर भट्टः

स्तुतिकुसुमांजलि प्रणेता काश्मीरिको महाकविः श्रीजगद्धर-भट्टो (१३५२) द्विपंचाशदधित्रयोदशशततमे खिस्टाब्दासन्नकाले स्वजन्मना देशमिमं समलङ्कृतवान्। अनेन चैश्वर्यमदग्रस्तलौकिक राजादिवृत्तवर्णनं परित्यज्य पूर्वं पुण्यार्जितनिरतिशयभक्तिरसोद्गा-रेण केवलं भक्तभयापहस्य शरणागतवत्सलस्य भगवतो महेश्वरस्यैव स्वकीये ऽष्टात्रिंशत्स्तोत्रात्मके स्तुतिकुसुमांजलिनामधेये महाकाव्ये चरित्रवर्णनं कृतम्। यत्प्रणयनेन स्वमानुषजन्मनः स्ववाण्याश्च साफल्यं भूयोभूयः समाकलयन्स्वमात्मानं धन्यतमममन्यत। तत्प्र-णीतस्तुतिकुसुमांजलिमहाकाव्यपरिचयेन ज्ञायते। कथमनेन महा-कविना स्वमतिवैभवप्रदर्शनपूर्वं निर्गुणस्य भगवतो गुणाः समुपव-र्णिताः। तदीयं महावैदुष्यं वैयाकरणत्वमलौकिकचमत्कारातिशयश्च तदीयमहाकाव्यपर्यालोचकैर्भक्त्युद्रेकपरिशीलिभिर्धन्यतमैर्महानुभावैरेवा-नुभवितुं शक्यते। नतु भगवद्भक्तिहीनै र्मन्दबुद्धिभिरधन्यै रिति सर्वतंत्रसिद्धान्ततया सर्वैर्विद्वद्वरैरुररी क्रियते। अनेन महाकविना नेकविधानां स्तोत्राणां नामानि च करुणाक्रन्दनं, दीनाक्रन्दनं, रुचिरंजनं

तमः प्रशमनं, प्रभुप्रसादनं, भगवद्वर्णनं, शरणागतोद्धारणं' पुण्यपरिणामस्तोत्रमित्यादीनितत्तत्स्तोत्रार्थ पर्यालोचनयाविहितानि । चित्रकाव्यानां महायमकार्धयमक पादयमकादि काव्यानां च स्वकीये महाकाव्ये भगवद्भक्तिरसाविष्करणपुरस्सरं समुपवर्णनं कृतम् । नैवंविधं परमेश्वर प्रेमरसास्वादभरितं महाकाव्यमद्ययावन्मदृष्टिगोचरतांगतम् । परमशिवभक्त्यातिशयशालिनो महात्मानः केचित् प्रतिदिनमिमं ग्रन्थं स्वाध्यायरूपेण धीयाना बहुशो दरीदृश्यन्ते । तदध्ययनेन च कमप्यलौकिकमानन्दमनुभवन्तः परमशिवं महादेवं स्वपुरःस्थितमिव मन्यन्ते । तद्यथा "प्रणमामि प्रणमामि स्तौमि स्तौमि प्रभुं जगन्नाथम् । ध्यायामि ध्यायामि, यामिच विमलं परंधाम," इतिकृतमति प्रसंगेन ।

अनेन महाकविनाशर्मवर्माचार्यप्रणीतानां कातंत्रव्याकरणसूत्राणा मतिसरला बालबुद्धिविवर्धिनी बालबोधिन्यभिधाना वृत्तिः स्वसुतस्य यशोधराभिधस्य शिशोरर्थे संपादिता । यथा च तस्याः प्रस्तावनायामनेनैव कविवरेण स्ववाचा तत्प्रणयनप्रयोजनवर्णनं च स्पष्टीकृतमस्ति, तद्यथा, "स्वसुतस्य शिशोर्यशोधरस्य स्मरणार्थं विहितो मयाश्रमोयम् । उपयोगमियाद्यदि प्रसंगादपरत्रापि ततो भवेदवन्ध्यः" इति" । द्वासप्तत्यधिकचतुर्दशशततमे १४ .२ खिस्ताब्दे च समुत्पन्नोऽस्मान्महाकवेः षष्ठः पुरुषः तन्नप्तृकन्यातनया तनूजो विद्वद्वरः श्रीराजानक शितिकण्ठो न्यासाभिधं जगद्धरभट्टरचितबाल बोधिनी वृत्तिव्याख्यानं निर्मितवान् । यथा तत्रैव बालबोधिनीन्यास प्रस्तावनायां श्रीमता राजानकशितिकण्ठेन स्वपूर्वजवंशावली परिगणन कालेऽस्य महाकवे र्महता ऽऽदरेण समुल्लेखो व्यधायि । तद्यथा—

"योबालबोधिन्यभिधांद्विजेन्द्रो जगद्धरोयां वितताव वृत्तिम् । तन्नप्तृकन्यातनयातनूजो व्याख्यामिमां श्री शितिकण्ठकोऽयम्" इति । बाल बोधिनीवृत्तिप्रारम्भेचानेन महाकविना स्तुतिकुसुमांजलि

महाकाव्यान्तर्गतनमस्काराख्यद्वितीयस्त्रोत्रस्थितं द्वितीयं पद्य मेव मंगल रूपेण निहितम्। तद्यथा—

"नमः शिवाय निःशेषक्लेशप्रशमशालिने।
त्रिगुणग्रन्थिदुर्भेदभवबन्धविभेदिने" इति।

एवंविधाः सर्वजनवन्द्या गुण्यगणाग्रगण्या महाकवयो देश मेवं स्वजन्मना समये समये समलंचक्रुः। येषां प्रादुर्भावेण न केवलं कश्मीर भूमिरेव प्रत्युत सर्वा भारतभूमि रपि धन्यतां श्लाघ्यतां च गतास्तीति शिवम्।

संपादको—नित्यानन्दः शास्त्री—

---

## "कन्या गुरुकुलम्"

( लेखिका—कुमारी दमयन्ती देवी एकादश कक्षा कन्या गुरुकुल देहरादून )

अयि ! प्राचीनार्यसाहित्यरसास्वादनप्रवीणाः ! रसिक पाठक महाभागाः ! प्राचीनसंस्कृतिवित्समाजे को न संस्तौति, वेत्ति वा विनष्टप्राचीनसाहित्योद्धारकस्य, प्राचीन शिक्षादर्शसंस्थापकस्य, स्वतंत्रतागौरवस्य, प्राच्यसभ्यता स्वरूपस्य, विनष्टसदाचारविस्तारकस्य, वैदिकधर्मानुशीलन संलग्नस्य, कन्यागुरुकुलस्य नाम तस्य शिक्षां वा, आनन्दरसखनिम् गुरुकुलीयशिक्षानन्दनकाननमिवपारिजातकुसुमानां, मलयगिरिरिवचन्दन वृक्षाणां, गगनमिवतारकगणानां शस्त्रागारमिवशस्त्राणां, रत्ननिधिरिवरत्नानां, निखिलादर्शाणां जनयित्री वर्तते।

देवाधिदेवविरचिते प्राकृतसौन्दर्यविश्वे विलसति देहरादून नगरम्। अस्मिन्लावण्याभिनयस्थले, मौनमुग्धमयसौन्दर्यस्याभिनयं, अलौकिकमाधुर्यमयंप्रतिभाति। श्यामशोभा शोभितेशैलप्रदेशे, अज्ञात मौनवेदनामयस्य, निर्झरस्याश्रुनीरधारायाः हरिद्रागरंजितानुपमसौन्दर्यमय्याः, हिमाद्रिरणेनधवलायाः समीरसमीरितसुमनः

सुरभिसौरभमय्याः, नाना विधपतत्रिगणगुंजित वृक्षावलिमंडितायाः, पर्वतीय वसुन्धरायाः, माधुर्यमयीशोभानुपमोल्लासमयी विभाति ।

तस्मिन्नेव नगरे "राजपुर प्रदेशे" इदं सुगृहीतनामधेयं कन्या-गुरुकुलमस्ति, दशसमाः समयः समतीयाय, यदा इदं नवजातमुग्धा दर्शभावनामयं शिशुरूपकुलं, सौरभमयपारिजात कुसुममिव, नन्दन-काननवसुन्धरायामिव कुलवसुन्धरायां प्रादुरभूत् । मधुरभावनाल-हरीभिरान्दोलितमिदमासीत् । निखिल भारतवर्षे प्राचीनशिक्षादर्शमयं कन्यागुरुकुलं विद्यते, बालकानां शिक्षा तु दरीदृश्यते, किन्तु बालि-कानां शिक्षा न्यूनतरा प्रतिभाति, तस्या एवापूर्णतायाः पूर्तिविधानाय एषा गुरूकुलीयसंस्था प्रकटीसंजाता ।

अस्माकं "आचारं ग्राहयतीति आचार्या" पदविभूषिता कुल जननी अस्ति, वात्सल्यभावनामयी, स्नेहसरित्प्रवाहमयी, कराल-कलमशनाशनतीक्ष्णासिधारामयी, मङ्गलमयी, सर्वदा च दुष्करव्रतोप-वासनियमपरिचर्य्यया, मङ्गलाभिलाषया, स्नेह छायया, अनवरतदेवा-धिदेवाराधनाविभूत्या अस्मान् रक्षति, सा प्राचीनादर्शमयी, त्रैलोक्य-दुर्लभा, तपस्विनीदेवी, "विद्यावती" सेठ बी. ए. इति धवलामलमयेन नाम्ना भुवनमंडले व्यवह्रियते अवलोक्यते, कन्या गुरूकुले प्रवृत्ति-ज्ञानार्जने, निवृत्तिपापार्जने, तृष्णापारलौकिक सुखेषु, लिप्सायशःसु, घृणापरनिन्दासु ।

संक्षिप्त रूपेण गुरुकुलीय शिक्षायाः त्रयः सुन्दरोद्देश्याः सन्ति ।

( १ ) सदाचारप्रचारः ।

( २ ) प्राचीन साहित्यस्य संस्कृतेश्चोद्धारः ।

( ३ ) भारतस्य राष्ट्रीययुगस्वतंत्रतायै समर्पणमयः प्रयासः ।

इदमेव त्रितयमन्तस्तले संस्थाप्य स्वकीयं कार्य क्रमं विदधाति, मानवसमाजस्यान्तस्तलविहारिण्यां प्रवृत्यां सदाचारस्य महत्यावश्य-कताऽस्ति । स्वभावतयैवमानवजातिः निवृत्तिमार्गं अपहाय प्रवृत्तिमार्ग-

मुपगच्छति, अस्माकमर्चनार्हं वेदे निगदितं परम कारुणिकेन विधिना यत् ।

**"आचारः परमोधर्मः"** मानव देहे मानवानां पथप्रदर्शक रूपेण अस्मिन् कुले प्रधानतया विराजते ।

अस्मिन् रत्नाकरकाञ्चीपरिवेष्ठिते, बहुविधद्वीपमण्डिते, हिमालय-शिखरकिरीटालंकृते भारतेवर्षे इयं सुरभारती प्रकटीभूता । सुरभारतीचरणकमलमंजुमंजीरझंकार– लहरी अस्माकं प्राचीनसंस्कृत-साहित्ये लहरिता । एषा सुरभारती परिवेष्ठिताऽस्ति, सौन्दर्य सुधाधूलि-पटलेन, अस्माकं निखिलं काव्य सौन्दर्यंगौरवसौन्दर्यं सभ्यता सौन्दर्यं संस्कृति सौन्दर्यं सुरभारती साहित्यारविन्दान्तस्तले मिलिन्द-वृन्दमिव आत्मानं संगोप्य अलङ्कृतमस्ति । अस्माकमखिल गौरवरहस्यं मुद्रिकायां रत्नमिव साहित्ये जटितमस्ति । प्राचीन संस्कृति साहित्य-स्योद्धार एव योग्योऽस्ति, साहित्यस्योद्घाटनमेवावश्यकं कार्यंमस्ति सुरभारतीभक्तानाम् ।

अस्माकं भारतजननी पराधीनपाशपाशिताअस्ति, सत्यधर्म प्रकाशकारिणीं सभ्यतामनन्तस्यान्तस्तले विहाय पश्चिमीय सभ्यता-मङ्गीकरोति । एषा सभ्यता पिशाचिनीव ज्योत्स्नाप्रायं कपटप्रकाशमयं स्वरूपं प्रकाश्य दुर्बलान् स्वाभिमुखमाकृष्य वशमानीय च अविरल क्लेश संकुले पातयति । अद्यास्मिन् निकृष्टतमं मार्गं सदाचारसमन्वितं मन्यमानाः दुराचारिणः प्रयान्ति, असत्यं सत्यमिति विधाय असत्यं सेवन्ते, अद्योल्लास्यते विलासः आचर्यते विभ्रमः, आवध्यते अश्लील-नृत्यगानगोष्ठी, भूयते भावविहीनैः, विधीयते दुराचारः, परिवर्त्तते प्राचीनविद्यालोकः सर्वत्र अनाचार एव प्रतीयते । तया सभ्यतया प्राचीनभारतवैभवानां परिमाणं धूलिसाद्विधायात्मसादकारि विधिना, भारतभाले असाफल्यमेवालेखि, अतएव अस्मिन् गुरुकुले वितीर्यते स्वाधीनता—भावना—राशिः—बालिकावृन्दस्यान्तस्तले । भारतस्य

स्वाधीनता यज्ञे आत्मानं समर्प्य भविष्ये स्वकीयां शिक्षां पूरयिष्यन्ति कुलबालिकाः।

यथा सुमनं न परिमलं, फलं न रसं, तेजोनालोकं चन्द्रो न चंद्रिकां, प्रभाकरो न प्रभां, समीरो न स्पर्शं, अम्बरो न शब्दं, शब्दो न प्रतिध्वनिं, कल्लोलिनी न जलप्रवाहं, जलनिधिर्नगाम्भीर्यं, नीरदो न नीरदानं, चपला न चापल्यं, बसन्तो न निखिलसौन्दर्यं वैभववितानं निदाघोनोष्मतां, हेमन्तोऽपि न हिमपातं, शिशिरो न शैत्यं, वसुन्धरा ऽपिन निखिल प्राणिधारणक्षमतां, मनो न संकल्पविकल्पानेवं, तथैवेदं कन्यागुरुकुलं सदाचारप्रचारं, प्राचीन साहित्यस्योद्घाटनं, स्वाधीनतायज्ञेआत्मसमर्पणं त्रितयमिदं न परिजहाति।

एकादश समाः समयं समाप्य समर्प्यते "विद्यालंकृता उपाधिः स्नातिकायै। गुरुकुलीयजीवनं, आदर्शमयं, सदाचारमयं, पवित्रतामयं, सरलतामयं, सौशील्यमयं, सौजन्यमयं, पवित्र भावनामयं, सरसतामयं, कुलप्रकाशकमयं प्रतिभाति।

"मित्रस्य चक्षुषा सर्वाणि भूतानि समीक्षन्ताम्"

देवाधिदेव ! वर्द्धय प्राचीनादर्शमयं कन्या गुरुकुल मिदम्।

भवत्वानन्दमयी विश्वमानव जातिः।

---

## मनोरञ्जक पुस्तक परिचयः

### वीररत्नमाला साधुरत्नमालाच

अनेननाम्ना पुस्तकप्रकाशनमाले द्वे श्रीयुतहसूरकरोपाह्वः श्रीपादशास्त्री सरलमनोरञ्जकसंस्कृतभाषायामुल्लेख्य प्रकाशन मारभत। पुस्तकानां प्रकाशकः श्रीपादवमन हसूरकरो इन्दौर नगरीत आसीत्। मुद्रापणालयस्तु निर्णयसागरप्रेस मोहमय्याम्। पाठकानां छात्राणाञ्चार्थे पुस्तकानामेतेषामध्ययनमति सुगमं मनोरञ्जकञ्च विद्यते। साधुरत्नमालायां समर्थश्रीस्वामीरामदास

चरितं श्रीमद्वल्लभाचार्यचरितञ्च वीररत्नमालायां छत्रपतिशिवराज महाराणाप्रताप महाराजपृथ्वीराजानां चरितानि उद्धृतानि। कतिपये वर्षाः व्यतीताः पुस्तकत्रयं प्रकाशनालयात् मया प्राप्तम्। प्रकाशनालयस्य प्रतिज्ञासीत् यदेतादृशानि बहूनि पुस्तकानि मालायामस्यां शीघ्रं प्रकाशितानि स्युः। प्रायशः प्रतिज्ञेयमपूर्णैव दृश्यते। प्रकाशकमहोदयः द्वित्रिवारं लिखितः सर्वपुस्तकमाला प्रेषणार्थं प्रचोदितश्च, परन्तु केवलं पुस्तके द्वे वर्षेऽस्मिन् प्रेषिते।

सर्वत्र संस्कृत पाठशालासु पुस्तकानामेतदृशानां पाठः भवितव्यः येन छात्राणां मनस्सु देशभक्ति साधुभक्तिश्च उपजायेत्। यद्यपि साधुमालायामलौकिक शक्तेः वर्णनं साधूनामक्वचिदसमञ्जसमप्राकृतञ्च प्रतीयते तथापि शुद्ध सत्यपवित्र जीवनं प्रसिद्धानामेतेषां पुण्यभागानां लोकसिद्धानां पूयंते मानवानां मनांसि। येषां सर्वमायुः लोकोद्धाराय समर्पितं ब्रह्मचर्यपूर्वकं जीवन निर्वाहितं हरिकीर्तन कथावार्तासु कालयापनं किं तेषां जीवनेतिहासो न भवेत् देशहिताय। साधुमालातोऽपि वीर रत्नमाला अत्यन्तमुपयोगिनी देशहिताय। आर्य्यसभ्यताया विचाराः पाठकानां हृदयेषुसुदृढं भवन्ति। क्रमशः मया वीररत्नमालासाधुरत्नमाला रत्नानां परिचयो दीयते समालोचना क्रियते पाठकानां लाभाय। मालापुस्तकानां मूल्यं तु किञ्चिदधिकमेव प्रतीयते। संस्कृत प्रचाराय यदि न्यूनं भवेत् मूल्यं तर्हि पुस्तकक्रयनं सुकरं सर्वकार्यार्थे भवेत्। पुस्तक प्राप्तिः स्थानं इमली बाज़ार ३० नम्बर स्ट्रीट नगरम् इन्दोर स्टेट।

स० स०

---

## परतन्त्र जीवनं हि कष्टम्

( पं गोविंददत्तः रैनादित्यवाटिका वास्तव्यः )

अद्यखल्वहं पूज्यतमानां समक्षं परतन्त्रजीवनं हि कष्टमिति विषयमवलम्ब्य स्वल्पतमया मत्या किञ्चिद् विवक्षुरस्मि। तच्चप्रथमतो

जगदुत्पादनैककारणं परमात्मानमस्याः परिषदः सदस्यांश्च नत्वारभे।

इह खलु परिवृत्तिशालिनि क्षणभङ्गिन्यनल्पसुखदुःखाश्रये जगति गृहमेधिनो 'माभूत् मे दुःखं सुखमहमाप्नुयामि' त्यहर्निशं चिन्तयन्तः कालमतिवाहयन्ति। सर्वे च गार्हस्थ्यजीवनसाफल्यार्थं पुनःपुनः प्रयतन्ते। तथा च जीवनसाफल्यार्थमनेकविधा वृत्तीः समाचरन्तो धनमर्जयन्ति। यतो हि धनमेव सौख्यम्। धनमेव जीवनम्। धनमेव सौन्दर्यम्। अत्र च धनेन एवादरो निर्धनस्यचावमानना। धनी नहि कदाचित् कष्टमनुभवति। इति गृहमेधिसङ्घः स्वकुटुम्बनिर्वाहाय सर्वसुखाधारभूतधनोपार्जनायोद्यच्छति। कश्चिद् गान्धिककर्मणा धनमुपार्ज्य स्वकुटुम्बभरणं विदधाति। कश्चन कृषिकर्म विधाय। अपरो वणिक्कर्मणा। अन्यश्च भृतिकर्मणा। तत्र वाणिज्यकृषिकर्मणी प्रधाने गण्येते। भृत्यादिकं च नितान्तं निकृष्टं परतन्त्रत्वात्। नहि भृत्यः कदाचित् स्वातन्त्र्यमवलम्बते। अपि त्वखिलोऽनेहा दुःखचिन्तन एव याति। सुखस्यानुभवमात्रमपि कर्तुं पारितो न भवति। अस्वातन्त्र्यं हि दुःखायैवालं नतु सुखाय। किञ्चसर्वे जनाः स्वीयं कर्म विहाय भृत्याचारभाचरन्तः पराधीनतायाः परां कोटिमनुभवन्ति। अन्यैरपि नृभिर्लोभात्कर्षप्रदमपिस्वीयं किमपि कर्मापहाय भृतिकर्मपरैरेव भूयते। परं भृतित्वकर्मणा कदापि स्वतन्त्रं जीवनं न वरीवर्तते। केचन नानापदवीविभूषिता अपि मानुषाः कष्टमेवानुभवन्ति। अतः प्रत्यहं भृतिकार्यभारचिन्ता तेसां चित्त दहति। अहश्च भृतिकार्यं सम्पादनेऽत्येति। रात्र्यप्यागामिदिनकार्यं चिन्तायामेव अतिक्रामति। सर्वैरेवभृतिकर्मकर्तृभिः स्वीयमायुः पराधीनताप्रज्वलिताग्नौ हूयते। महान्त्सूरिरपि कस्यांचित् संस्थायां कायमाचरन् साधारणकार्यस्खलितेनापमानितो नितरां कष्टमनुभवति। भृतिकर्म कुर्वाणाः सहस्रशुल्क वेतनं लभमाना अपि मानवाः कार्यानवधानतया महतीं तर्जनामधिगच्छन्ति। अन्येषा सामान्यभृत्यानां तु का कथा। आर्जवावर्जितन्यकृतयोऽपि द्विजातयः

केचन लाभप्रदमपि स्वीयं कर्म विहाय पारतन्त्र्यपारावारे मज्जनाय प्रविशन्ति। कोटिशो हिन्दवः कृषिवाणिज्यादिकर्माण्यपहायात्मशिरःसु परतन्त्ररूपं चन्द्रहासं घूर्णयन्तो भृतित्वमेव स्वीकुर्वते। अन्ये पुनश्चन्द्रिका वद् धवलमात्मीयं यशः पङ्के निमग्नीकुर्वाणा आत्मानं भृतित्वे नियोजयन्ति। आधुनिकीया विद्वद्वरिष्टाः सूरिसेव्याङ्घ्रिकमला अपिभृतित्वं बहुतरं श्रेयस्करं वर्तत, इति मन्वते। मन्मत्या तु भृत्यत्वं हि क्षेमङ्करं कदापि न वर्तते। पश्य! स्वामिना बहुवारं भर्त्सितोऽपि भृत्यो न किमपि प्रत्युतरयति, अपितुनतशिरोपरोधरामेव निरीक्षते पराधीनत्वेन धर्मकर्मणी विनश्यतः। भृतिकर्म कुर्वाणे मनुजो न तत् परिहातु पारितो भवति, कुटुम्बभरणासंभवात्। इत्थं पराधीनतापाशावृत्ता भारतीया भृति कर्मणैव निजजीवनं सफलं मन्यमानाः कृष्यादिकं कर्म जहति। स्वीयाञ्च्छावकानपि भृति कर्मण्येव नियोजयन्ति। यतो हि महतीमुत्कर्षप्रदां पदवीं लभमाना उत्तरोत्तरामुन्नतिं लप्स्यन्त इति मन्यन्ते। एतदेवात्रत्यानां जनानामुच्चशिक्षाया निदानम्, नान्यत् किञ्चित्। स्वाधीनञ्च जीवनं मुनयोऽपि मुक्तकण्ठं शश्लाघिरे। भृतिकर्म च सर्वतो निन्द्यते। सेवां कवयः श्ववृत्तेरपि नीचगतिं प्रापयन्ति। तथाहि—

सेवा श्ववृत्तिराख्याता यैस्तैर्मिथ्या प्रलपितम्।
स्वच्छन्दं चरति श्वात्र सेवकाः परशासनात्॥
कृषिः सर्वोत्तमा प्रोक्ता वाणिज्यं मध्यमं स्मृतम्।
अधमं भृति कार्यञ्च भिक्षागौरवनाशनी॥

किं बहुना। अलमनल्प प्रलापेन। तस्मात्सर्वथा परतन्त्रजीवनं परिहार्यम्। शिल्पादि नैव स्वतन्त्रेण स्वनिर्वाहः श्लाघ्यतरःसुखतरश्चेति। महाभागाः! यूयं सम्प्रत्यपि परतन्त्रकारागारे प्रसुप्ता स्थ अन्यदेशीयाः सर्वे प्रबुद्धा। यूयं कथं न निद्रां जहीथ। सर्वैरेव जाग्रद्भिर्भवितव्यम्। न प्रसुप्तैः। इत्यहमभ्यर्थये नतमस्तकः। अनुचितं सानुकम्पं क्षाम्यताम्। इति।

# भोटदेशे बौद्धधर्मः ।

श्री त्रिपिटकाचार्यः राहुलः सांकृत्यायनः )

५६३ ईसवीयवत्सरे सिद्धार्थगौतमस्य जन्म । कृतमे वत्सरे साक्षात्कृत्य चतुरार्यसत्यादीन् धर्मान् स कृतकृत्योऽधिगताऽधिगन्तव्यो बुद्धपदं प्राप । ततः पंचचत्वारिंशदब्दं भारते मध्यमण्डले विचरन् दिदेश स्वाबगाहितान् धर्मान् । ४८३ ई० पूर्ववत्सरे स किल भगवान् लोकलीलां विससर्ज । ततः बुद्धानुयात्रिकैर्मनीषिभिर्वीतरागैः महाकाश्यपा-ऽऽनन्द-मौद्गलिपुत्र-महेन्द्र-वसुमित्रा-ऽश्व-घोष-नागार्जुना-ऽसंग-वसुबधु-धर्मपालप्रभृतिभिर्भिक्षुभिः, अशोक-मिलिन्द-कनिष्क-प्रभृतिभिर्नराधिपैश्च बुद्धादेशनामृतसलिलाबगाहिभिः भारते सर्वत्र, देशान्तरेषु च दूरं यावद् बुद्धधर्माः समतानि ।

क्रिस्तुजन्मतः प्रागेव यद्यपि बुद्धधर्मप्रवेश आसीत् यवन-मिश्र-सिरियादिषु सुदूरवर्तिषु राष्ट्रेषु, अथापि भारतपार्श्ववर्तनि भोट (=तिब्बत) जनपदे क्रिस्तुसप्तमशतकात्प्राक् अभूदस्य प्रवेश इत्यत्र नास्ति दृढं प्रमाणम् । मुद्राण-वायनादियंत्रैः, आयो मार्ग- स्वंयवङ्पोत--विमानादिजलस्थलान्तरिक्षगामिभिर्वाहनैः, मौन मुखर-खलचित्रैश्च व्याप्यमानेऽपि निखिलभूवलये, दुर्गमहिमवदुत्तुंग-प्राकारपरिवृततयाऽधुनाऽपि भोटदेशः तैर्विरहितोदुर्धर्षकालबलं अपि हर्षयन्तिष्ठतिः; तत्र तादृशी पूर्वघटना न विस्मयापादिका । वस्तुतः ६१८ ई० वत्सरे जातस्य स्रोङ्--चन्--सगम्-पो-चक्रवर्तिनः राज्यारोहणानन्तरमेव भोटदेशो बाह्येन जगता-ऽभूत्संबद्धः । आयुषः त्रयोदशतमे संवत्सरे ( ६२९ ई० ) सोङ-चन् सूगम्-पो पितू राज्यमाससाद । ततः क्रमेण क्षात्रशक्तिं संचिन्वानो वु-चाङ ( मध्य-भोट ) प्रदेशौ विजित्य महता वलेन दिग्विजये मनो दधे । अन्त्ये तस्य राज्यसीमा प्रतीच्यां दरदेषु गिलगित-नगरं, उदीच्या गोबी-मरुभूमिः, प्राच्यां पौरस्त्याचीनः, दक्षिणस्यां हिमवतो निम्नतमं

सानु। एतादृशो महतः साम्राज्यस्य संचालनं, लिपिं विना न सुकरं, इति संचित्य तेन अनु-तनयः थोन्-मी ( थोन्-ग्राम-वासी ) सम्भोटो भारते विद्याध्ययनार्थं प्रेषितः। एतेनैव कश्मीर-लिपिमनुहरन्ती भोट लिपिर्विरचिता या चाधुनाऽपि तत्र प्रवर्तते। ६४० ईसवीये नयपालाधिपतेरां ऽशुवर्मणः कन्या स्रोङ्-चन्-नराधिपेन परिणीता; द्वितीयवत्सरे चीनंनरेशोऽपि स्वदुहितरं प्रादात्। एवं बुद्धपथपथिकयोः उभयोः चीन-नयपाल-राजवंशयोः संबंधेन राजगेहे बौद्धधर्मः प्राविशत्। चीन-राजकुमार्य्या ल्हास नगरे र. मो. छे नामकं सुगतमंदिरं व्यरचि; नयपाल कुमार्या असामर्थ्यं विमृश्य चक्रवर्ती स्वयमेव नगरस्य मध्यभागे जो-खङ् संज्ञया प्रसिद्धिगतं भव्यं बुद्धवेश्म निर्ममे काले चीनदेशादानीता काष्टमयी बुद्ध-प्रतिमाऽप्यत्रैवानीता इदानीमपि वर्तते। स्रोङ्-चन् काले केचिद्ग्रन्था संस्कृतभाषातो भोटभाषायामनूदिताः श्रूयंते; परंते साम्प्रतं नोपलभ्यंते।

स्रोङ्-चत्-नृपस्य मरणानंतर ( ६९७ ई० ), तस्य पुत्रो मङ्-स्रोङ्-भेङ्-बचन् ( ६१७-७१२ ई० ) पौत्रः रिपु-लूटे-गूचुग्-बपूर्तन् ( ७०३-८०२ ई० ) शशासतुः। पितृ-पितामहवत् एतावपि धर्मप्रसारणे सहायभूतौ। अनुक्रमेण भोटराष्ट्रे सर्वत्र बौद्धधर्मः संचचार। ततः अनेकभूमिकं कूटागारं, परितः द्वीपा (=ग्लिङ् ) भिधेयानि १२ परिस्रोङ्-चन् प्रपौत्रः रिप-स्रोङ्-लूदे-बचन् ( ८०२-४५ ई० ) प्रपितामहवत् त्रयोदश वार्षिक एव सिंहासनमरुहत्। बुद्धधर्म-प्रभाव-विस्तारं निरीक्ष्याऽबौद्धा मंत्रिणः केचन विरोधिनो जाताः। तेषां प्रावल्येन राजसमीपे धर्मसंदेश-वाहको न कोऽप्यभूत्। राजातु स्ववंशेतिहासाध्ययनकाले पूर्वजानां बुद्धे प्रीतिं निरीक्ष्य, सबहुमानमन्विष्य प्रच्छन्नभावेन बौद्धान् ग्रन्थान् अधीयाय। तस्यैतस्मिन् कर्मणि गूसल्-सूनङ् ( पश्चाद् ज्ञानेन्द्रनाम्ना प्रख्यातः ) प्रोत्साहनं प्रादाद्। वय-प्राप्तो मनुजेशः गूसल्-सूनङ्-द्वितीय काश्मीरकं अनंत पंडितं बौद्धग्रंथानां भाषान्तीरीकरणे नियुक्तवान्। परं, मंत्रिणां विपक्षितया अनिष्ठितकृत्यां तौ अन्येच

विद्वांसः सीमान्तं प्रेषिताः। ज्ञानेन्द्रो नयपालसीमा-निबद्धं मङ्-युल्न-प्रदेशं जगाम।

अथ गच्छति कियत्यपि काले, ज्ञानेन्द्रः पुना राजधानीमगात्। अपगतशैशवेन ख्रि-स्रोङ्-चक्रवर्तिना सह रहसि धर्मसम्बन्धिनो नाना संजल्पाः संजाताः। ततो विरोधिनोऽप्यपास्य चक्रवर्तिना अन्यैस्सह ज्ञानेन्द्रः शान्तरक्षितं समानेतुं प्रेषितः। भोटदेशमागतेऽप्याचार्ये शांतरक्षिते तत्रासीद् भाषायाः काठिन्यम्। परं काश्मीरिक पंडित अनन्त आसीदुभयभाषापंडितः। आचार्यो लुङ्-छुग्-नामके राजप्रसादे मासचतुष्टयं दशकुशलाऽष्टादशधातुद्वादशांग प्रतीक्ष्यसमुत्पादादि गम्भीरान् विषयान् आदिदेश। सर्वे सन्तुष्टाः, अथापि ततः परमेव जलप्रकोपः, लोहितगिरौ (यत्रेदानीं पोतला प्रासादः तिष्ठति) अशनिपातः, पशुषु भीषणा व्याधिश्च प्रासरत्। प्रजाभिः चिन्तितं—नूनं अस्मद्देशीया देवाः प्रकुपिता आचार्यधर्मदेशनया। एवं असफल प्रयत्न एवाचार्यो नयपालदेशं प्रत्याव्रजीत्।

अनेकानब्दानागमय्य, अथ ग्सल्-नङ् बौद्धधर्म ग्रन्थान् अन्वेष्टुं चीनेषु प्रेषितः, सङ्-शीप्रभृतयः त्रिंशच्चाचार्यं शान्तरक्षितं समानेतुम्, ते तु नापारयन्। चीनतः प्रतिनिवृत्तं ज्ञानेन्द्रं राजाऽथ प्रैषीत् तमानेतुम्। श्रूयते—देवकोपशमनार्थं आचार्यसम्मत्या अद्भुतमंत्रसिद्धिसमन्वितपद्मसंभवो भोटदेश आनीतः परमत्र श्रद्धा प्रमाणम्।

ततो राजानुमत आचार्यो ल्हासातो दिनद्वयमार्गे लौहित्य नदाविदूरे ब्सम्-यस् स्थाने विहारं निर्मातुमारेभे। अयं हि विहारः तत्र पालवंशिकनृपति-धर्मपाले ७६६-८०६ ई० निर्मिति उदन्तपुरी विहारेण तुल्याकारः। विहार निर्माणं ७८७ ईसवीये प्रारब्धः अयोदश वत्सरेषु ७९६ ई० च निष्ठितम्। अत्र हि मध्ये मेरुपर्वत सदृशं अनेकभूमिकं कूटागारं परितः द्वीपा (=ग्लिङ्) भिधोमानि १२ परिवेणानि।

शम्स्-ग्सुम्-ब्सङ्-ग्लिङ्, द्बु-ऽछल्-ग्सेर-खङ्-ग्लिङ्, द्गे-र्ग्यस् ब्ये-म-ग्लिङ्, ब्दुद्-ऽद्बुल्-स्ङग्-प-ग्लिङ्, ब्बै-स्व्योर-छङ्स्-पक्षिऽ-ग्लिङ्, द्कोर्-म्ज़ोद्-पे-हर्-ग्लिङ् इत्येवमादीनि । विहारं परिक्षिप्यासीन्महान् प्राकारः । तदा प्रतिमाकृतिः भोटजनानुकारिणी कृताऽऽसीत् । ततः पूर्वं गृहस्थभावेनैव भोटजना बुद्धधर्मे दीक्षिता अभूवन् । इदानीं अनेकेषाँ श्रद्धालूनां प्रव्रज्यायां महतीं श्रद्धां विलोच्य तान् उपसंगदीयितुं संघस्येऽपेक्षित संख्यापूर्त्यर्थं नील आचार्येण नालन्दाविहारतः सप्त भिक्षवः समाहूताः । मेष-संवत्सरे ( ७१० ई० ) च सप्त भोटजनाः—ज्ञाने-द्र-श्रीघोष-वैरोचन-रक्षित-जिनोत्तमघोष, नागेन्द्र रक्षित-रत्नोत्तरा भिक्षुदीक्षां प्रापुः ! एतेषां चित्राणि ब्सम्-यस् बिहारभित्तिषु अंकितानि आसन ।

आचार्यः शान्तरक्षितोऽतिबार्धक्ये भोटदेशं गतः । तस्मिन् काले तस्यमुखे एक एव दन्त आसीत्, तस्मात्तन्मुखं एकदन्तावशिष्टं क्रियते । चिरं धर्मकृत्यं विधाय शतायुर्भूत्वा सोऽश्वपादाघातेना ऽऽहतः शरीरं तत्याज । तच्च शरीरं अग्निसात्कृत्वा ब्सम्-यस् विहारस्योत्तर पार्श्वात्तर पार्श्वस्थे पर्वत एकस्मिन् चैत्ये न्यधायि । सहस्राधिकान् वत्सरानतिवाह्य, इतः कतिपयवर्षेभ्यः प्रागूतद्जीर्ण चैत्यं स्वयमेव ध्वस्त; ततः बहिरागतानि कपालादीन्यस्थीनि इदानी ब्सम्-यस्-विहारस्य प्रधान मंदिरे काचकपाराभ्यंतरे स्थापितानि। बौद्धाबौद्धेषुसकलेषु भारतीयदर्शनेषु अस्याचार्यस्यातलस्पर्शिज्ञानं बडोदातो मुद्रितात् तत्कृत ग्रंथरत्नात् "तत्त्वसंग्रहा" देवावगम्यते ।

विमलमित्रबुद्धगुह्य-शान्तिगर्भ-विशुद्धसिंहप्रभृतय आचार्याः, छोस्० क्यि० स्नङ्० व ( =धर्मालोक )—बन्दे—नम्. म्खऽ—स्ग्रो. रिन्—छेन्—स्दे ( =स्ग्रोवासि रत्नसेन )—नम्. पर. धि. त्तॉग्. प—शाक्य. ऽोद ( =शाक्यप्रभ ) दिभिर्भोटभाषान्तरकारैस्सह बौद्धग्रन्थानां भाषान्तराणि चक्रुः । ब्सम्—यस् ( =सम्—ये ) विहारस्य ब्दुम्, ऽदुल-साग्-प-ग्लिङ्-परिवेण आसीत् तत्र प्राधान्य, तांत्रिको धर्मकीर्तिस्तत्र प्रधानः ।

नैम्-दग्-रिव्रम्स-खङ्-गिङ्-परिवेण आसन् काश्मीरिका विनय (=भिक्षुनियम) चार्यो जिनमित्र दानशीलपुरोगाः। मि-ग्यो-व्सम्-गतन् ग्लिङ्-परिवेणे योग-चर्याचरणपराः चैनिका भिक्षवः। व्र्द-स्व्योर-छङ्रू-पडि-ग्लिङ् परिवेणे व्याकरणकोशादीनां भाषान्तरीकरणम्। द्कोर-म्जोद-पे-हर्-ग्लिङ्-परिवेणमासीत् संघस्य कोषागारम्। वैरोचनविहारे भवतिस्म शास्त्रचर्चा।

आचार्यशान्तरक्षितस्यानन्तरं श्रीघोषोऽभूत् भोटभिक्षुसंघस्य नायकः। परं क्रमेण चैनिकाचार्या शिष्या बृद्धिं गताः। ते च उच्छेद-वादं ( मरणान्तं हि जीवितं ) इव किमपि दिशन्तो जनान् कर्मपथात् विरथमांचक्रुः। तेन खिन्नो ज्ञानेन्द्रो ल्हो-ब्रग्-पर्वत गतः, एवमन्ये-ऽपिस्थानान्तरं जग्मुः। काले राजाऽप्यतीवासन्तुष्टो ज्ञानेन्द्रमाकार्य सममंत्रयत्। आचार्यशान्तरक्षितेन प्रागेवोक्तं—अग्रे यदि कोऽपि विवादो जायते, नालन्दातो मच्छिष्यः कमलशीलो निमंत्रयितव्य इत्याकर्ण्य आचार्य आमंत्रितः।

तत आचार्यकमलशीलस्य चीनाचार्यस्य च राज्ञो माध्यस्थ्य आसीद् वादः। यत्र कमलशीलो विजयी, प्रतिपक्षिभिश्च स्वयमेव स्वप-राजयः स्वीकृतः। चीनाचार्यः चीनदेशं प्रेषितः। घोषितं च राज्ञा—सिद्धान्ते नागार्जुननयः, आचारणे चाहिंसादीनि दशकुशलानि दश परमकुशलानि च स्वकर्त्तव्यानि। आचार्यकमलशील स्तत्रवाऽतिष्ठत् धर्मशिक्षणे व्यापृतः ततः किंचित् कालानन्तरं चीनाचार्यप्रेषितैः चतुर्भिर्घातकैराचार्यो मारितः। तच्छोकसन्तप्तो ज्ञानेन्द्रोऽपि अनश-नेन शरीरं तत्त्याज। राजाऽपि ६९ वर्षवयसि ८४४ वत्सरे लोकान्त-रमगात्।

ततो रिव्र-स्रोङ्-नृपति-पुत्रो मु-ने-चेन्-पो ( ८४५ ई० सिंह-सनामरुहत्। अद्यतनश्चैनिकतुरुष्कस्थनं, पश्चिमचीनान्तर्गताः केचन प्रदेशा, ब्रह्मदेशस्योत्तरभागः, आसामतो गिल्गितं यावत् हिमवत्प्रदे-शानां भूयान् भागश्च तदाऽऽसन् भोटसाम्राज्यान्तर्गताः। तादृशस्याइ

चिन्त्यसंपत्तिशालिनो राज्यस्याऽधिपतिर्भूत्वाऽपि राजा मु-ने-चेन्-पो नाऽऽसीदन्तरंगे सुखी। पश्यतिस्म स बहून् जनान् अन्न-वसन-विरहेण क्लिश्यमानान्। अन्त-वसन-सम्पन्नेष्वपि, ऐश्वर्यतारतम्यात् नीचोच्च-भावः, मानापमानवर्तनावा, तेन च महती हृदयज्वाला। श्रुतानि तेन शैशवादेव बोधिसत्त्व जातकानि, यत्र पदे पदे वर्णितं महापुरुषाणां परहिताय सर्वस्वदानम्। विभावितं च तेन मनसि—शरीरं व्याधि-जराग्रस्तं भंगुरं तत्सपर्यया-मात्रेण कथं स्यान्मादृशानां चित्ततुष्टिः। कर्णपथागतानि बोधिसत्त्वजातकानि मया स्वाचरणेनोदाहार्याणीति। असकृवद् विचिन्त्य तेन निर्धारितं—कस्मादनेके श्रमपरायणा अपि अन्न-वसन हीनाः ?—अस्ति यत एकेषां समीपेऽपारधनराशिर्निजश्रमा-ऽनुपार्जिता। असह्यमिदं वैषम्यं—भूयांसः शरीरयात्रोपयोगीनि अति साधारणानि वस्तून्यपि नोपलभन्ते, अन्येतु सुवर्णराशिं अहरहरपव्य-यन्ति। धनिकेष्वपि तु धनतारतम्यादपमानासहिष्णुतादयो व्याधयः। भोगसाम्यमेवैतेषां सर्वेषां रोगाणां महौषधम्। अथ तस्याज्ञया भोटराज्ये ( भोटदेशमात्रे, सम्पूर्णे वा साम्राज्य इत्यत्र नाऽस्त्यन्य-तरविनिगमकम् ) सर्वत्र सम्पत्तेः समवितरणं जातं, वैषम्यं च देशतो निर्वासितम्। ननु श्रमेसमविभागमन्तरा धनसमविभागो ऽकिंचित्करः। तस्मात् किंचित्कालानंतरं पुनरपि तद्वैषम्यमागतम्। राजा पुनरपि द्वितीयवारं, ततः तृतीयवारं तथैवाकरोत्। तस्यैतेनाचरणेन राजवंश्याः सर्वे आढ्यवर्गाश्च चुक्रुधुः। अन्त्ये तज्जनन्यैव विषमदायि। एवं सप्तमा-साधिकं संवत्सरैकं राज्यं प्रशास्य "देव भूतो मनुष्येषु" मु-ने-चेन्-पो ( ८४६ ई० इमं लोकं विहाय अनुकूलतरं प्रति प्रतस्थौ।

ततः तत्पुत्रः खि्-ल्दे-चन्-पो राज्यधुरं त्रिंशदब्दान् उवाह। सोऽपि स्वपूर्वजैरिव धर्मेऽनुरक्त आसीत्। तत्पुत्रो रल्-प-चन् ( ८७६—१०९ ई० ) भोटदेशे त्रयाणां धर्मराजानां एकः। अष्टादशवर्षवयसि सोऽभिषिक्तः। पूर्वमपि तत्पूर्वजानां काले आचार्यशान्तरक्षित-ज्ञानेन्द्र-सङ्-ग्यल्-अेन्-अ-क्सड्-क्लोन् खि्-दिसर-सङ्-शि-ज्ञानदेवलेश-

ल्व्य-ऽग्र्ग्-अनन्त-प्रभृतिभिरनेके ग्रंथा भोटभाषायां अनूदिता। परं तेषां भाषा नासीत् भोटदेशीयानां कृते सुगमा, न च भाषान्तरीकरणे तत्र समानः क्रमः। तैरेकैक शब्दस्य कृते ऽनेके प्रतिशब्दाः प्रयुक्ता आसन्। एतां अव्यवस्थां विलोक्य राज्ञाऽज्ञप्तं—अपरान्तकाचार्यैः जिनमित्र-सुरेन्द्रबोधि-शीलेन्द्रबोधि-बोधिमित्रैः, रत्नरक्षित-धर्मताशीलज्ञानसेन ( =ये-शेष-स्दे )-जयरक्षित-मंजुश्रीवर्म-रत्नेन्द्रशीलप्रभृति भिक्षु भोटदेशीयैराचार्यैः हीनयान-महायान ग्रंथा मूलसंस्कृततएव-भाषान्तरीकर्तव्याः। प्रतिशब्दा निश्चित्य लेखनीयाः। भाषान्तरीकरणार्थमवधारिता नियमा न कदाप्युल्लंघनीयाः। पूर्वानूदिता ग्रंथाश्च उक्तनियमेन पुनः संशोधनीयाः।

सर्वास्तिवादस्वीकृता एव हीनयानग्रन्था अनूद्याः। गुह्यमंत्रग्रंथा न भाषान्तरीकरणयोग्याः। तेनैव राज्ञा द्रोणादीनि भारतीय मानानि भोटाराष्ट्रे प्रचारितानि। भिक्षुषु महत्यासीत् तस्यास्थाक्ष शिरसापादस्पर्शपूर्वकं स भिक्षून् वन्दते। एकैकस्य भिक्षोः परिचर्यायां तेन सप्त सप्त गृहिणो नियुक्ताः। युद्धेऽपि स प्रबलः। चीनराजं पराजित्य तद्विजयं सूचना ल्हासानगरे स्थापित "दीर्घपाषाण"—स्तम्भे लिपिकारितेदानीमपि वरीवर्ति। राज्याश्रयमुपलभ्य भिक्षुषु भोगलिप्सावृद्धिर्जाता। लोकेषु नाना भ्रमाः प्रसृताः। अन्त्ये राजाऽपि (९०१ ई०) मारितः।

ततो राज्ञोऽनुजो लङ्-दर्-म ( ९०१-२ ई० ) राज्याधिकारी संपन्नः। तस्यैव तन्मंत्रिणोऽपि बुद्धशासनविरोधिनः। तेनऽऽचार्याणां भोटभाषान्तरकाराणां च निवासपरिवेणानि विध्वस्तानि, धर्मग्रंथा विनाशिताः। बलात् भिक्षवः स्वाश्रमधर्मतो विमुखीकृताः। भिक्षुवेषधारिणो चापरादि प्रदानपुरस्सरं मृगयाकार्ये नियुक्ताः आज्ञाविरोधिनो घातिताश्च ल्हासामामंदिरे स्थापिता बुद्धप्रतिमा वालुकाराशौ निगूहिता। ब्सम्-यस्-र-मो-छे विहारयोर्द्वाराणि सुधया समाच्छादितानि। इमानि क्रूरकर्माण्याकर्ण्य ल्ह-लङ् निवासी द्पल्-ग्यि-र्दोर्जे

छद्मनृत्त्यं प्रदर्शयन् तं राजांगण एव जघान। रिन्-छेन्-म्छोग् आदयो भिक्षवो घातकैर्मारिताः।

एवं स्रोङ्-चन्-कालात् रल-प-चन्-नराधिपं यावत् (९०१) अनुक्षणं बुद्धशासनाऽभ्युदयकालो भोटदेशे। अन्तिमकाले वैराग्य-जीवनं विहाय राजार्हभोगलिप्सवस्ते राजनीतावपि एक पक्षग्राहिणोऽन्यपक्षविरोधिनोजाताः। तत्प्रतिफलं इदं यद्, लङ्-दर्-म-कालत आरभ्य सप्ततिवर्षं यावद् मध्यभोटदेशे (=ल्हासा-प्रदेशे) भिक्षुसंघ उच्छिन्नप्रायः। भिक्षव प्रपलाय्य प्रागुदक्प्रत्यग्दिक्षु जग्मुः। भारतीयाचार्येष्वेके प्रत्यन्तमाश्रिताः, अन्ये स्वदेशं प्रत्याजग्मुः।

कनिष्ठा महिषी राज्ञो मरणकालेऽन्तर्वत्नी ९०३ ईसवीये वत्सरे डोद्-स्रुङ् नामानं कुमारं प्रासूत ततः ९६५ ई० वत्सरं यावत् राज्यशक्तेरवनतिरेवाऽभूत्। अनेके प्रदेशा स्वतंत्रा जाताः। द्पल्-ऽखोर्-व चन्-नामकस्य (जन्म ९५३, अभिषेकः ९६५, मृत्युः ९८२) तत्पुत्रस्यकाले भिक्षुसंघस्योत्पीडनं अल्पं, अथापि देशेऽशांतिः। पूर्वं सर्वे बौद्धमहाविहारा विद्यापीठाश्च मध्यभोट एवासन्। एतस्मिन् काले प्रदेशान्तरेषु गत्वा भिक्षुभिरनेके विहाराः स्थापिताः। ऽखोर्-व-चन्-पुत्रस्य ञ्क्र-शिस्-ब्र्चेग्स्-प-द्ल् इत्यस्य काले तदनुजो ख्रि-स्क्यिद्-ल्दे ञि-म-म्गो निर्वासितः (९६५ ई०?) पश्चिमास्यां ङ-री-प्रदेशं स्वायत्तीचकार। स्पु-रङ् तस्य राजधान्यभूत्। तेन त्रिषु कुमारेषु ङ-री प्रदेशो विभक्तः—तत्र ज्येष्ठो द्पल्-ग्यि-ल्दे-रिग्-प-म्गोन् मर (=लदाख)-प्रदेशं शशास; मध्यमो ञ्क्र-शिस्-ल्दे-मीन् स्पु-रङ्-प्रदेशं; कनिष्ठो ल्दे-म्चुग्-म्गोन् च शङ् शुङ् (=गू गे)-प्रदेशम्। म्चुग्-म्गोन्-पुत्रयोर्ज्येष्ठः ऽखोद्-ल्दे धर्म भावाशिरितो राज्यं कनिष्ठाय स्रोङ्-ल्दे-कुमाराय दत्त्वा स्वपुत्राभ्यां नागराज-देवराजाभ्यां सार्द्धं प्रवव्राज। ततः परं स ज्ञानप्रभ ((=ये-शेस्-ऽोद्) नाम्ना प्रसिद्धिं लेभे।

———

# संस्कृत साहित्य परिषद् श्रीनगर

## भाद्रपदमासः

सौर भाद्रपद मासस्य १९ तमे दिवसे परिषदो मासिकाधिवेशने ५ वादन समये मध्याह्ने पण्डितात्मानन्दो विद्यलंकारो गुरुकुल स्नातकः संस्कृतभाषायां व्याख्यानमदात् "सांख्य विचाराणां व्यवहार उपयोग" इति विषयमधिकृत्य। पण्डित महोदयेन ५० क्षणेषु सत्वरज स्तमसां प्रयोगः सर्वत्र व्यवहारेषु सम्यक् प्रदर्शितः। सांख्यकारिकायाः प्रमाणानि निर्दिश्य मनुस्मृतौ भगवद्गीतायाञ्च यान्युदाहरणानि विषयेऽस्मिन् तत्वं दर्शकान्यासन्, तानिउद्धृत्य सुन्दररीत्या व्याख्यातानि। २० पुरुषाणां सभा मन्दिरे व्याख्यानावसरेऽस्मिन्नुपस्थितिरासीत्। पाठशालायाः केचन छात्रा अप्यद्य सभायामागताः। मन्त्रिणा "तेषामर्थे सभायाः विशेषं कार्यं भवति, तेषामागमनञ्चात्यावश्यकमिति" विद्यार्थिनः प्रचोदिताः॥

---

## आश्विन मासः

१६ तमे दिवसे सभाया अधिवेशनमभूत् ५ घण्टानादिते सति। अद्य तु राजकीयैः छात्रैः सभामण्डपमलंकृतमासीत्। तेषु चतुःपञ्चभिः स्वल्पै र्लेखैश्चोपस्थितसज्जनाः सन्तोषिताः। बहिः स्थितस्य कस्यचिदद्य नासीत्परिषद्युपवेशः। पं० लक्ष्मीचन्द्रेणापि केचन श्लोकाः पठिताः।

## कार्तिक मासः

(परिषदः सप्तमो वार्षिकोत्सवः)

सौर कार्तिक मासस्य २० तमे दिवसे शीतलनाथमन्दिरे सेतु प्रदेशे परिषदः सप्तभो वार्षिकोत्सवः समजनि। उत्सवस्य प्रयोजनन्त नगरे काश्मीरिकाणां पंडितानां प्रतोलीषु [illegible]
भाषोन्नति आर्य सभ्यतायाः प्रचाराश्चासीत्। [illegible]
धिवेशनानि त्वस्य हिन्दूसहायकसभ[illegible]

प्रचारार्थं तु नगरे रचितोत्सवे हिन्दूनां प्रसिद्ध शीतलनाथ मन्दिरे यद्यपि तादृशो जनसमूहो नासीत् तथापि ( १०० ) शताद्धिकं पण्डिताः सभामलंकुर्वन् । अस्मिन्नवसरे पारितोषिकाणि—उत्तम लेख कविता सम्बन्धीनि १०) दश रूप्यकानां निश्चितान्यासन् ।

आशास्पदं यत् दश लेखाः पारितोषिकार्थाः प्राप्ताः । तेषां मध्ये तिस्रः कविता आसन् । कैश्चिन्महानुभावैस्तु स्वकृतयः तत्काल एव मधुरवाचा पठिताः, अन्येषामागामिनि मासिकाधिवेशनकृते ऽवशिष्टाः ।

"भारतीय महापुरुषाणां जीवन" मिति विषयमवलम्ब्य सर्वे लेखाः कविताश्चसन् । महात्मा तुलसीदास—ईश्वरचन्द्र विद्यासागर—गुरुनानक—स्वामी दयानन्द—भगवान् कृष्ण प्रभृतयः सांसारिक जन सुधारकाः लेखितॄणां विषया अभूवन् । साहित्य परिषदा मन्त्रिणा मया तदन्ते परिषदोऽस्याः संक्षिप्तेतिहासः वर्णयता सभासदां वृद्ध्यर्थं श्रोतारः याचिताः । दश नवीनाः सभासदः प्राप्ताः । निबन्ध कर्तॄणां शुभ नामान्येतानि ।—

गोविन्द द—[illegible]—सर्वानन्द—जगन्नाथ—लक्ष्मीचन्द्र प्रभृतयः ।

**मार्गशीर्ष मासः**

वार्षिकोत्सवे [illegible] निबन्धकर्तारः स्वकीय लेखव्याख्याने समयाभावादक्षमाः ; अवशिष्टास्तु मासस्यास्य दशम्यां ( १० ) तिथौ मासिकाधिवेशने परिषदः निबन्धान् स्वानऽपठन् । अस्मिन्नेवाऽवसरे त्रीणि पारितोषिकानि गोविन्ददत्त—सर्वानन्द—प्रेमनाथेभ्यो वितीर्णानि । त्रय एव एते महाशया राजकीय पाठशालाया अन्तेवासिनः, शास्त्रिश्रेण्यान्तर्गताः । गोविन्ददत्तस्यमहात्मा विद्या सागरस्य जीवन चरित्रे पद्यमयो हृदयोद्गारः । सर्वानन्दस्य गुरुनानक-विषये पद्यार्चनम् । तथा च प्रेमनाथस्य "पिताधर्मः पिता कामः" इति [illegible]तः त्रिमास पर्यन्तं हेमन्ते परिषदोऽधिवेश-[illegible]न, मार्गाणाञ्च हिमार्द्रत्वात्कर्तुमशक्यानि ॥

—डू- ———